तद्यावद्गृहं गत्वा कार्यशेषं चिन्तयामि । ( इति निष्क्रान्तः । )

विष्कम्भकः ।

---

( ततः प्रविशत्यासनस्थो गृहीतवसन्तोत्सववेषो राजा विदूषकश्च । )

राजा—( सहर्षमवलोक्य । ) सखे वसन्तक ।

विदूषकः—आज्ञापयतु भवान् । ( क )

राजा—

राज्यं निर्जितशत्रु योग्यसचिवे न्यस्तः समस्तो भरः
सम्यक्पालनलालिताः प्रशमिताशेषोपसर्गाः प्रजाः ।
प्रद्योतस्य सुता वसन्तसमयस्त्वं चेति नाम्ना धृतिं
कामः काममुपैत्वयं मम पुनर्मन्ये महानुत्सवः ॥ ९ ॥

---

( क ) आणवेदु भवं ।

---

विग्रहकथः विश्रान्ता उपरता शत्रोरभावात् विग्रहस्य युद्धस्य पक्षे अनङ्गत्वात् हरकोपाग्निना दग्धदेहत्वाद्वा शरीरस्य कथा यस्य स तथोक्तः । रतिमान् प्रजाप्रेमवान् अनुरागवान् वा । पक्षे रतिः स्वप्रिया तद्वान् । जनस्य चित्ते वसन् तद्वात्सल्यात्पक्षे मनसिजत्वादिति भावः । प्रियः वसन्तकः तन्नामा विदूषकः । पक्षे वसन्त एव वसन्तकः । स्वार्थे कन् । तत्संज्ञः ऋतुर्यस्य । पर्युत्सुकः सोत्कण्ठः सन् । निजः स्वयं प्रवर्तितत्वात् पक्षे आत्मानं उद्दिश्य कृतत्वात् यः महांश्चासौ उत्सवश्च महोत्सवः तस्य दर्शनाय एवाभ्युपैतीति संबन्धः । श्लेषालंकार उत्प्रेक्षालंकारश्च । तयोरङ्गाङ्गिभावेन संकरः । छेकानुप्रासोऽनुप्रासश्च । वसन्ततिलकं वृत्तम् । तल्लक्षणं–' ज्ञेयं वसन्ततिलकं तभजा जगौ गः । ' इति ॥ ८ ॥ तद्यावदित्यवधारणे । कार्यशेषं रत्नावलीप्राप्तिरूपं यत्कार्यं तत्र यदवशिष्टं तत् । **विष्कम्भकः**—एतल्लक्षणं दशरूपके–'वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः । संक्षेपार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः ॥ एकानेककृतः शुद्धः संकीर्णो नीचमध्यमैः ।' इति । अयं च एकेन मध्यमपात्रेण कृतत्वाच्छुद्धः । **तत इति**—गृहीतः परिहितः वसन्तोत्सवस्य वेशो येन स तथा । **विदूषकः**—अस्य लक्षणं–'कुसुमवसन्ताद्यभिधः नर्मवपुर्वेषभाषाद्यैः । हास्यरसः कलहरतिर्विदूषकः स्यात्स्वकर्मज्ञः ॥ ' इति दर्पणे । अन्यत्र च—' नर्मभेदप्रयोगज्ञो हास्यकृन्नायकस्य च । नर्मवादी स वै नर्मसचिवश्च विदूषकः ॥' इति । अस्य प्राकृतं पाठ्यम् । तदुक्तं–' विदूषकविटादीनां पाठ्यं तु प्राकृतं भवेत् ।' इति । **वसन्तक** 'वयस्येत्यथ वा नाम्ना वाच्यो राज्ञा विदूषकः ।' इत्युक्तत्वान्नाम्ना निर्देशः । **राज्यमिति** । निःशेषेण जिताः । स्ववशमानीता इत्यर्थः । निर्जिताः शत्रवः यस्मिन् तथाभूतं मे राज्यम् । योग्यः राज्यकार्यक्षमः स चासौ सचिवः मन्त्री तस्मिन् समस्तः भरः राज्यतन्त्रचिन्ता न्यस्तः आहितः । प्रजाः प्रशमिताः विनाशिताः अशेषाः सकलाः उपसर्गाः यासां तादृश्यः । सम्यक् सुविहितं यत्पालनं रक्षणं तेन लालिताः संवर्धिताः वर्तन्ते । प्रद्योतस्य तदभिधस्य

---

१ दहमपि गृ०, २ अनुचि०, संपादयामि ३ समन्तादु०; सानन्दम्; सादरम्. ४ अस्मात्परं–प्रियवयस्य पश्य. ५ ०वन्यस्तः. ६ लालनपा०.

विदूषकः—( सहर्षम् । ) भो वयस्य एवं न्विदम् । अहं पुनर्जानामि न भवतो न कामदेवस्य ममैवैकस्य ब्राह्मणस्यायं मदनमहोत्सवो यस्य प्रियवयस्येनैवं मन्यते । ( विलोक्य । ) तत्किमनेन । प्रेक्षस्व तावदस्य मधुमत्तकामिनीजनस्वयंग्राहगृहीतशृङ्गकजलप्रहारनृत्यन्नागरजनजनितकौतूहलस्य समन्ततः शब्दायमानमर्दलोद्दामचर्चरीशब्दमुखररथ्यामुखशोभिनः प्रकीर्णपटवासपुञ्जपिञ्जरितदशदिशामुखस्य सश्रीकतां मदनमहोत्सवस्य । ( क )

( क ) भो वअस्स एव्वं ण्णेदम् । अहं पुण जाणामि ण भवदो ण कामदेअस्स मम ज्जेव एक्कस्स वम्हणस्स अअं मअणमहूसवो जेस्स पिअवअस्सेण एवं मन्तीअदि । ता किं इमिणा । पेक्ख दाव इमस्स महुमत्तकामिणीजणसअंगाहगहिदसिङ्गकजलप्पहारणच्चन्तणाअरजणजणिदकोदूहलस्स समन्तदो घुम्मन्तमद्दलुद्दामचच्चरीसद्दमुहररच्छामुहसोहिणो पइण्णपडवासपुञ्जपिञ्जरिज्जन्तदसदिसामुहस्स सस्सिरीअदं मअणमहूसवस्स ।

उज्जयिनीनृपस्य सुता वासवदत्ता रमणीयगुणा रतिसदृशी मम पत्नी । भोगानुकूलो वसन्तस्य समयः कालः । मम प्रियकरणदक्षः त्वं च । यद्वा वसन्तस्य इव समयः आचारः मम नर्मसहायत्वाद्यस्य तादृशः त्वम् । इति पूर्वोक्तेभ्यः षड्भ्यो हेतुभ्यः । कामः नाम्ना मदनमहोत्सव इति नाममात्रात् कामं पर्याप्तं यथा तथा धृतिं संतोषमुपैतु प्राप्नोतु । पुनः इति भेदे । अहं तु अयं महानुत्सवः ममेति मन्ये । अत्र ममैवायमुत्सव इत्यस्य राज्यं निर्जितशत्रु इत्यादिभिर्हेतुभिः समर्थनात्काव्यलिङ्गमलंकारः । शार्दूलविक्रीडितं वृत्तम् । अत्र धृतिर्नाम व्यभिचारी भावः । स च शक्तितः ( द. रू. ४. १२ ) । अत्र चिन्ताराहित्यादिध्वननात् धीरललितो नायक उक्तः । तदुक्तं—' निश्चिन्तो धीरललितः कलासक्तः सुखी मृदुः । ' इति । विशेषस्तु दशरूपके द्रष्टव्यः ॥ ९ ॥ ब्राह्मणवटुकस्येति पाठे ब्राह्मणश्चासौ बटुश्च ब्राह्मणवटुः क्षुद्रब्राह्मणः । कडारादित्वाद् ब्राह्मणशब्दस्य पूर्वनिपातः । अनुकम्पितः ब्राह्मणवटुः ब्राह्मणवटुकः । अनुकम्पायामिति कन् । अस्य मदनमहोत्सवस्य सश्रीकतां शोभां प्रेक्षस्वेति अन्वयः। कथंभूतस्येत्याह—मधुना मद्येन मत्तः मधुमत्तः । काम आसां विद्यते इति कामिन्यः । अत इनिठनौ इति इनिः । ऋन्नेभ्यो ङीप् इति ङीप् । तासां जनः कामिनीजनः । मधुमत्तश्चासौ कामिनीजनश्च तस्य यः स्वयंग्राहः स्वेच्छाग्रहणं तेन गृहीतः । शृङ्गाण्येव शृङ्गकाणि तेषां ये जलप्रहारास्तैः हेतुभिः नृत्यन् यः नागरजनः तेन जनितं प्रेक्षकाणां कौतूहलं यस्मिन् । पुनः किंभूतस्य । शब्दायमाना ये मर्दला मृदङ्गास्तैः उद्दामा उद्दामो वा यः चर्चर्या गीतविशेषस्य शब्दस्तेन च मुखराणि सशब्दानि यानि रथ्यामुखानि तैः साधु शोभते तस्य । पुनश्च किंभूतस्य । प्रकीर्णाः विक्षिप्ता ये पटं

१ बम्हणवडुअस्स ( वटुकस्य ). २ जस्स किदे [ कृते ]; जेण पिअव...मन्तीअदि [ मन्यते ]. ३ ०वअस्सो एवं मन्तेदि. ४ सुच्छन्द [ स्वच्छन्द ], सुवुत्त [ सुवृत्त ]. ५ रज्जपइण्ण. ६ पिञ्जरिद, ०सज्जन्ददिसामुहस्स, ०दसदिसस्स. ७ सिरिअं [ श्रियं ].

राजा—( समन्तादवलोक्य । ) अहो परां कोटिमधिरोहति प्रमोदः पौराणाम् । तथा हि ।

> कीर्णैः पिष्टातकौघैः कृतदिवसमुखैः कुङ्कुमक्षोदगौरै—
> हैमालंकारभाभिर्भरनमितशिखैः शेखरैः कैङ्किरातैः ।
> एषा वेषाभिलक्ष्यस्वविभवविजिताशेषवित्तेशकोशा
> कौशाम्बी शातकुम्भद्रवखचितजनेवैकपीता विभाति १०

अपि च ।

> धारायन्त्रविमुक्तसंततपयःपूरप्लुते सर्वतः
> सद्यः सान्द्रविमर्दकर्दमकृतक्रीडे क्षणं प्राङ्गणे ।
> उद्दामप्रमदाकपोलनिपतत्सिन्दूररागारुणैः
> सैन्दूरीक्रियते जनेन चरणन्यासैः पुरः कुट्टिमम् ॥ ११ ॥

---

वासयतीति पटवासः पिष्टातकस्तस्य पुञ्जास्तैः पिञ्जरितानि पीतीकृतानि दशदिशानां मुखानि यस्मिन् तथाविधस्य । **कीर्णैरिति** । एषा कौशाम्बी नगरी शातकुम्भे पर्वतविशेषे भवं शातकुम्भं सुवर्णं तस्य द्रवो रसः तेन खचिता व्याप्ता जना यस्यां सा शातकुम्भद्रवखचितजना इव । एकः मुख्यः पीतः पीतवर्णो यस्यां सा । एका केवला पीता चेति वा । एकपीता विभाति । तत्र हेतूनाह—कुङ्कुम घुसृणं तस्य क्षोदः चूर्णं तेन गौरैः अरुणैः । अतः कृतं दिवसस्य मुखमारम्भः प्रत्यूष इत्यर्थः । यैः तथाविधैः कीर्णैरितस्ततः क्षिप्तैः पिष्टातकस्य पटवासस्य ओघैः पुञ्जैः । तथा च हेम्नोलंकाराणां जनधृतानां भाभिः दीप्तिभिः । अपि च भरेण भारेण नमिताः नम्रीकृताः । णम् धातोर्णिजन्तात्कर्मणि क्तः । 'मितां ह्रस्वः' इति ह्रस्वत्वम् । शिखाः शिरांसि इत्यर्थः यैः तादृशैः । किङ्किरातानामशोकानां लक्षणया तत्पुष्पाणां विकाराः कैङ्किराताः तैः । तस्य विकारः इति विकारार्थे अण् । पीताशोकपुष्पघटितैः । शेखरैः आपीडैः च हेतुभिः । तथा च वेषेण वस्त्रालंकारादिधारणेन अभिलक्ष्यः उन्नेयः यः स्वविभवः निजैश्वर्यं तेन विजितः अशेषः सकलः वित्तेशस्य कुबेरस्य कोशो वित्तसंचयो यया तादृशी । अत्र कौशाम्ब्या उत्कर्षवर्णनादुदात्तालंकारः । शातकुम्भद्रवखचितत्वोत्प्रेक्षणाद् हेतूत्प्रेक्षा च । सा चेवशब्दवाच्या । स्रग्धरा छन्दः ॥ १० ॥

**धारायन्त्रेत्यादि** । सर्वतः धारायन्त्रैः जलोद्गारयन्त्रैर्नलिकाभिर्वा विमुक्त उद्गीर्णः यः संततः अविरतः पयःपूरः जलसंघातस्तेन प्लुते प्लाविते तथा च सद्यः तत्क्षणमेव सान्द्रः निविडः यः विमर्दः पादैः निष्पेषस्तेन यः कर्दमः पङ्कस्तत्र कृता क्रीडा यस्मिन् । एतादृशे प्राङ्गणे उद्दामा उद्दामानो वा अप्रतिबन्धं नृत्यन्त इत्यर्थः । याः प्रकृष्टो मदो यासां ताः प्रमदाः तासां कपोलेभ्यो निपतन् यः सिन्दूररागः तेन अरुणैः रक्तैः चरणन्यासैः पादविक्षेपैः पुरः समीपवर्ति कुट्टिमं बद्धभूमिः क्षणं सैन्दूरीक्रियते सिन्दूरमयमिव सिन्दूररक्तं वा क्रियते । सिन्दूरस्य इदं सिन्दूरेण रक्तमिति वा

---

१ सहर्षं सम०. २ प्रमोदः पुरः. ३ क्षोदवासैः. ४ शिरःशे०. ५ लक्ष्या. ६ स्रुते. ७ रस—कृत-क्रीडाक्षमे. ८ विलसत्सिन्दूरसान्द्रारुणं; सिन्दूरचूर्णारुणे—चूर्णारुणैः; चूर्ण—राग—रुणम्. ९ सैन्दूरं. १० जनस्य. ११ पुनः.

विदू०—(विलोक्य।) इदमपि तावत्सुविदग्धजनभरितशृङ्गकजलप्रहारमुक्तसीत्कारमनोहरं वारविलासिनीजनविलसितमवलोकयतु प्रियवयस्यः।(क)

राजा—(विलोक्य।) वयस्य सम्यग्दृष्टं त्वया। कुतः।

अस्मिन्प्रकीर्णपटवासकृतान्धकारे
दृष्टो मनाङ्मणिविभूषणरश्मिजालैः।
पातालमुद्यतफणाकृतिशृङ्गकाऽयं
मामद्य संस्मरयतीह भुजङ्गलोकः॥ १२॥

विदूषकः—(विलोक्य।) भोः एषा खलु मदनिका मदनवशविसंष्ठुलं वसन्ताभिनयं नृत्यन्ती चूतलतिकया सहेत एवागच्छति। तदवलोकयत्वेतां प्रियवयस्यः। (ख)

---

(क) ईमं पि दाव सुविअद्धजणभरिदसिङ्गकजलप्पहारमुक्कसिक्कारमणहरं वारविलासिणीजणविलसिदं आलोएदु पिअवअस्सो। (ख) भो एसा क्खु मअणिआ मअणवसविसंठुलं वसन्ताभिणअं णच्चन्ती चूअलदिआए सह इदो ज्जेव आअच्छदि। ता अवलोएदु एदं पिअवअस्सो।

---

सैन्दूरम्। उभयत्र अण्। न सैन्दूरमसैन्दूरं असैन्दूरं सैन्दूरं संपद्यमानं क्रियते सैन्दूरीक्रियते। अभूततद्भावे च्विः। अनुप्रासालंकारः। शार्दूलविक्रीडितं वृत्तम्॥ ११॥ सुविदग्धेति। सुविदग्धाः तादृक्क्रीडापटवः ये जनाः तैः भरिताः पूरिताः। भर एषां संजात इति भरिताः। 'तदस्य संजातं तारकादिभ्य इतच्' इति इतच्। यद्वा भृत इति च्छाया। ये शृङ्गकास्तेषां जलेन ये प्रहारास्तैः हेतुभिः मुक्ताः सीत्कारास्तैर्मनोहरम्। वारस्य जनसमूहस्य विलासिन्यः वारविलासिन्यः गणिकाः। अस्मिन्निति। अस्मिन् प्रकीर्णश्चासौ पटवासश्च तेन कृतश्चासौ अन्धकारश्च तस्मिन्। अनेन प्रकीर्णपटवासपुञ्जानां सान्द्रत्वमतिप्रभूतत्वं च सूचितम्। मणिमयानि मणियुक्तानि वा पक्षे मणय एव विभूषणानि मणिविभूषणानि। तेषां रश्मिजालैः किरणसमूहैः। इह मनाक् किंचिदस्पष्टमिति यावत्। दृष्टः। उद्यताः फणा इव आकृतिर्येषां ते फणाकृतयः शृङ्गका येन। पक्षे फणाकृतयः शृङ्गका इव येन। उपमितं व्याघ्रादिभिरिति समासः। व्याघ्रादेराकृतिगणत्वात्। यद्वा उद्यतं फणाकृति फणारूपं शृङ्गकं चिह्नं येन। एवंविधः अयं भुजङ्गा विटास्तेषां लोकः समूहः। पक्षे सर्पलोकः। अद्य मां पातालं संस्मरयति। स्मृ आध्याने इति घटादौ पाठात् मित्त्वेन ह्रस्वः। स्मरणालंकारः श्लेषश्च। वसन्ततिलकं वृत्तम् ॥ १२ ॥ मदनस्य वशेन आयत्तत्वेन विसंष्ठुलं विषमं यथा

---

१ ०क्य सविस्मयम्; समन्तादवलोक्य. २ दृष्टं भवता; साधु दर्शितम्. ३ महा०. ४ विभूषितरन्न. ५ मणि. ६ तीव. ७ पुरोवलोक्य ८ भो वअस्स इमं; वि०–(पुरोऽवलोक्य।) इमिणा किं, एदं पेक्ख; इमं–एदं. ९ ०अद्धविडजणो–णा–वहरिद (विटजनो–ना–पहृत); जणपूरिद०. १० प्पवाह. ११ वाणिदालोअ. १२ अवलो०. १३ भो वअस्स पेक्ख एसा...च्छदित्ति अव०. १४ मआ(मदा)वस०; मअणपरवसं णच्चन्ती; मअवसविब्भमदत्ताभिणअं, मअणरसविसअदत्ताभिणआ; मअणूवसा वसन्ता०; मअपरवसा विसंवदन्ताहिणअं णच्चन्तीए चूदल०, मअणवसावेसं वहन्ती अभिणअं णच्चन्ती.

( ततः प्रविशतो मदनलीलां नाटयन्त्यौ द्विपदीखण्डं गायन्त्यौ चेट्यौ । )

चेट्यौ—

कुसुमायुधप्रियदूतको मुकुलायितबहुचूतकः ।
शिथिलितमानग्रहणको वाति दक्षिणपवनकः ॥ १३ ॥
विकसितबकुलाशोककः काङ्क्षितप्रियजनमेलकः ।
प्रतिपालनासमर्थकस्ताम्यति युवतिसार्थकः ॥ १४ ॥
इह प्रथमं मधुमासो जनस्य हृदयानि करोति मृदुलानि ।
पश्चाद्विध्यति कामो लब्धप्रसरैः कुसुमबाणैः ॥ १५ ॥ ( क )

( क ) कुसुमाउहपिअदूअओ मउलाविदबहुचूअओ ।
सिढिलिअमाणग्गहणओ वाअदि दाहिणपवणओ ॥
विअसिअवउलासोअओ कङ्क्षिअपिअजणमेलओ ।
पडिवालणासमत्थओ तम्मइ जुवईसत्थओ[६] ॥

तथा । वसन्ताभिनयं वसन्तव्यञ्जकं यथा स्यात्तथा । मदनलीलां कामविलासम् । द्विपदी गीतिविशेषः । तदुक्तं—'भवेद् द्विपदिका गीतिर्भरतेन प्रकीर्तिता । युक्ता चतुर्भिश्चरणैस्त्रयोदशकलात्मकैः ॥' इति । तस्याः खण्डस्तम् । अत्र भरतः—'शुद्धा खण्डा च मात्रा च संपूर्णेति चतुर्विधा । द्विपदी करणाख्येन तालेन परिगीयते ॥...खण्डा स्याच्छुद्धयार्धया ।' इति । विशेषस्तु भरते द्रष्टव्यः । कुसुमायुधेत्यादि । दक्षिणः दक्षिणदिगुत्पन्नः । पवन एव पवनकः । अल्पार्थे कः । मन्द इत्यर्थः । दक्षिणश्चासौ पवनश्च दक्षिणपवनः वाति । कीदृश इत्याह । कुसुमान्यायुधान्यस्य कुसुमायुधः कामः तस्य प्रियश्चासौ दूतकश्च प्रियदूतकः । मुकुलायिताः मुकुलैरायिताः गर्भिताः । संजातमुकुलाः कृता इत्यर्थः । बहवः चूतका आम्रवृक्षका येन स तथोक्तः । मुकुलीकृतेति पाठे मुकुला एषां विद्यन्त इति मुकुलिनः । न मुकुलिनः अमुकुलिनः अमुकु० मुकु० कृताः मुकुलीकृताः । अभूततद्भावे च्विः । शिथिलितं शिथिलं कृतम् । त्याजितमिति यावत् । मानिनीनामिति शेषः । मानस्य रमणविषये प्रणयकृतस्याभिमानस्य ग्रहणं येन तादृशः ॥१३॥ विकसितेत्यादि । विकसिताः । पुष्पिता इत्यर्थः । बकुलाश्च अशोकाश्च येन तथोक्तः । मधुगण्डूषदानेन पादताडनेन चेति भावः । एतच्च कविसमयात् । तदुक्तं—'पादाहतः प्रमदया विकसत्यशोकः शोकं जहाति बकुलो मुखसीधुसिक्तः ।' इति । विशेषोऽप्रऽष्टादशश्लोकस्य व्याख्याने द्रष्टव्यः । काङ्क्षितः प्रियजनानां मेलकः समूहः येन । प्रतिपालने प्रियागमनकालप्रतीक्षणे असमर्थः । सुप्सुपेति समासः । स्वार्थे कः । सार्थ एव सार्थकः । युवतीनां सार्थकः समूहः ताम्यति ॥१४॥ इहेति । इह अस्मिन्वसन्तावतारे । मधुश्चासौ मासश्च मधुमासः । प्रथमं जनस्य हृदयानि मृदुलानि कोमलानि

१ गृहीतमदनोत्सववेषेण मदनावस्थां नाट०; ०शनः गृहीतवसन्तवेषे—वेषोत्सवे. २ मदनिका गायति. ३ मउलाइदघणन्त्र०, कुसुमा...दूअअं मउलावन्तो चूअअं ( कुसु०...दूतं मुकुलयंश्चूतं ). ४ मोअओ ( मोदकः ). ५ पिअअम ( नम ); उक्कण्ठिअ ( उत्कण्ठित ) पिअमेलओ. ६ अस्मात्परं—अहवा ( अपरा ) इत्य० क्वचित्.

राजा—( निर्वर्ण्य सविस्मयम् । ) अहो निर्भरः क्रीडारसः परिजनस्य । तथा हि ।

स्रस्तः स्रग्दामशोभां त्यजति विरचितामाकुलः केशपाशः
क्षीबाया नूपुरौ च द्विगुणतरमिमौ क्रन्दतः पादलग्नौ ।
व्यस्तः कम्पानुबन्धादनवरतमुरो हन्ति हारोऽयमस्याः
क्रीडन्त्याः पीडयेव स्तनभरविनमन्मध्यभङ्गानपेक्षम् ॥ १६ ॥

विदूषकः—भो वयस्य अहमप्येतयोर्मध्ये गत्वा नृत्यन् गायन् मदनमहोत्सवं मानयिष्यामि । ( क )

राजा—( सस्मितम् । ) वयस्य एवं क्रियताम् ।

विदूषकः—( उत्थाय चेट्योर्मध्ये नृत्यन् । ) भवति मदनिके भवति चूतलतिके मामप्येतां चर्चरीं शिक्षयतम् । ( ख )

---

इह पढमं महुमासो जणस्स हिअआइं कुणइ मिउलाइं ।
पच्छा विद्धइ कामो लद्धप्पसरेहिं कुसुमबाणेहिं ॥

( क ) भो वअस्स अहंपि एदाणं मज्झे गदुअ णच्चन्तो गाअन्तो मअणमहूसवं माणइस्सम् । ( ख ) भोदि मअणिए भोदि चूअलदिए मंपि एदं चच्चरिं सिक्खावेह ।

---

कुसुमशरभेदार्हाणीत्यर्थः । करोति । पश्चात् कामः लब्धः प्रसरः अवकाशः यैः तैः कुसुमबाणैः कुसुमरूपैर्बाणैः तानि हृदयानि विध्यति भिनत्ति । 'अरविन्दमशोकं च चूतं च नवमल्लिका । नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः ॥' इति कामस्य बाणाः ॥१५॥ अहो इत्याश्चर्ये । क्रीडारसः विहारासक्तिः । निर्भरोऽतिमात्रः । क्रीडारसस्य निर्भरत्वमिति यावत् । निर्भरत्वमेव प्रतिपादयति—स्रस्त इति । क्षीबाया मधुपानोन्मत्तायाः । 'अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः' इति निपातनात्साधुः । अत एव स्तनयोर्भरः स्तनभरस्तेन विनमन् नम्रीभवन् यो मध्यः कटिभागस्तस्य भङ्गस्तत्र अनपेक्षा अनवधानं यस्मिन्कर्मणि तद्यथा तथा क्रीडन्त्याः अस्याः पुरो दृश्यमानायाः स्रस्तः बन्धनाद्विगलितः आकुलः व्यस्तः केशपाशः केशकलापः पीडयेव विरचितां स्रग्दाम्नः । तत्कृतामित्यर्थः । शोभां त्यजति । इमौ पादलग्नौ नूपुरौ मञ्जीरौ पीडयेव द्वौ गुणौ आवृत्ती यस्य तद् द्विगुणम् । अतिशयेन द्विगुणं द्विगुणतरं अत्यन्तमित्यर्थः । क्रन्दतः रुदित इव । उद्दामनर्तनाद्यः कम्पः अङ्गानां दोलनं तस्य अनुबन्धात्संततत्वाद् व्यस्तः इतस्ततः क्षिप्तोऽयं पुरो दृश्यमानः हारः मुक्ताहारः पीडयेव अनवरतं सततमुरो हन्ति । अत्र शोभात्यागादिक्रियाणां पीडाहेतुत्वेनोत्प्रेक्षणात् हेतूत्प्रेक्षालंकारः । स्रग्धरा वृत्तम् ॥१६॥ एतासां बद्धपरिकराणामिति पाठे बद्धः परिकरः याभिः । वधूपरिजनानामिति पाठे वध्व

---

१ विलोक्य. २ अहो मधुरोयमासां नि०...रसः; ( सहर्षं ) अहो; ( निर्वर्ण्य ) अहो मधुरं प्रवृत्तः मदनमहोत्सवः. ३ पश्य. ४ तरमिवा. ५ मुच्चैः. ६ येव. ७ ०वेक्षम्. ८ एतन्नास्ति क्वचित्. ९ अस्मात्प्राक्—जं भवं आणवेदि इत्य०. १० नृत्यति. ११ अस्मात्परं—इति गायन्त्यौ नृत्यतश्चेट्यौ । इत्य०. १२ एदाणं वह्न ( वधू ) परिजणाणं, वज्झपरिअराणं ( बद्धपरिकराणां ); णच्चन्तो मअण०. १३ चच्चरिअं.

उभे—( विहस्य । ) हताश न खल्वेषा चर्चरी । ( क )

विदूषकः—तत् किं खल्वेतत् । ( ख )

मदनिका—द्विपदीखण्डं खल्वेतत् । ( ग )

विदूषकः—( सहर्षम् । ) किमेतेन खण्डेन मोदकाः क्रियन्ते । (घ)

चेट्यौ—( विहस्य । ) न हि न हि । पठ्यते खल्विदम् । ( ङ )

विदूषकः—( सविषादम् । ) यदि पठ्यते तदलं ममैतेन । वयस्यस्य सकाशमेव गमिष्यामि । ( गन्तुमिच्छति । ) ( च )

उभे—( हस्ते गृहीत्वा । ) एहि क्रीडामः । वसन्तक कुत्र गच्छसि । ( इति बहुविधं वसन्तकमाकर्षतः । ) ( छ )

विदू०—( आकृष्य हस्तं प्रपलाय्य राजानमुपसृत्य । ) वयस्य नर्तितोऽस्मि । न हि न हि । क्रीडित्वा पलायितोऽस्मि । ( ज )

राजा—साधु कृतम् ।

---

( क ) हदासि ण क्खु एसा चच्चरी । ( ख ) तो किं क्खु एदं । ( ग ) दुअई-खण्डं खु एदं । ( घ ) किं एदिणा खण्डेण मोअआ करीअन्दि । ( ङ ) णँ हि ण हि । पढीअदि क्खु एदं । ( च ) जइ पढीअदि ता अलं मम एदिणा । वअस्सस्स सआसं जेव्व गमिस्सम् । ( छ ) एहि कीलम्ह । वसन्तअ कहिं गच्छसि । ( ज ) वअस्स णच्चिदोम्हि । ण हि ण हि । कीलिअ पलाइदोम्हि ।

---

एव पारजनाः परिचारिका इत्यर्थः । मानयिष्यामि सत्करिष्यामि । हताश इति कुत्सायाम् । हताः आशा यस्य असौ हताशः । किमेतेनेति । खण्ड इति शब्दश्रवणेन खण्डशर्करेति मन्वानस्य मोदककरणसंबद्धः प्रश्नः । विहस्येति । भोजनप्रियस्यास्य सर्वं भोजनसंबद्धमेव इति विस्मयो हासकारणम् । बहुविधमनेकप्रकारं यथा तथा ।

---

१ सादरम्. २ अस्मात्प्राक्—( सविस्मयं ) पढीअदि क्खु एदं इत्य० क्वचित्. ३ गन्तुमुद्यतः; तथा करोति. ४ भो वअस्स; हदास...०री । दुवईखण्डं क्खु एदं. ५ भोदि ( भवति ) किं. ६ मोदआ लड्डुआ वा. ७ भो वअस्स, हदास, हदास पढिदव्वं क्खु एदं. ८ भो पढीअदि जइ क्खु एदं ता मम अलं इमिणा; जदि पढीअदि न भुञ्जीअदि ता एदिणा न मम कज्जं. ९ वरं पिअ० ज्जेव सआ०. १० मदनिका–( हस्ते गृ० ) हदास कहिं गच्छसि, हदास चच्चरिअं सिक्ख ( इति बहुविधं ताडयति । ); हदास चिट्ठ । विना कीलिअं कहिं गमिस्ससि । ( इति आकर्षतः—बहुविधं ताडयतः ). विदू०—( बलाद्गच्छाति । राजानमुपसृत्य । ) जअदु जअदु भट्टा । भो वअस्स णच्चिदम्हि गाइदम्हि ।; उभे–आकर्षतः । विदू०—आकर्षति । मद०—हदास कहिं गच्छसि । इह ज्जेव कीलम्ह.

चूत०—हञ्जे मदनिके चिरं खल्वावाभ्यां क्रीडितम्। तदेहि। निवेदयावस्तावद्भर्त्र्याः संदेशं महाराजाय। (क)

मदनिका—सखि एवं कुर्वः। (ख)

उभे—(परिक्रम्य उपसृत्य च।) जयतु जयतु भर्ता। भर्तः देव्याज्ञापयति—(इत्यर्धोक्ते लज्जां नाटयन्त्यौ।) न हि न हि। विज्ञापयति। (ग)

राजा—(विहस्य सादरम्।) मदनिके नन्वाज्ञापयतीत्येव रमणीयम्। विशेषतोऽद्य मदनमहोत्सवे। तत्कथय किमाज्ञापयति देवी।

विदू०—आः दास्याःपुत्रि। किं देव्याज्ञापयति। (घ)

उभे—एवं देवी विज्ञापयति—अद्य खलु मया मकरन्दोद्यानं गत्वा रक्ताशोकपादपतले संस्थापितस्य भगवतः कुसुमायुधस्य पूजा निर्वर्तयितव्या। तत्रार्यपुत्रेण संनिहितेन भवितव्यम्। (ङ)

राजा—(सानन्दम्।) वयस्य ननु वक्तव्यमुत्सवादुत्सवान्तरमापतितमिति।

विदूषकः—भो वयस्य तदुत्तिष्ठ। तत्रैव गच्छामो येन तत्र गतस्य ममापि ब्राह्मणस्य स्वस्तिवाचनं किमपि भविष्यति। (च)

---

(क) हञ्जे मअणिए चिरं क्खु अम्हेहिं कीलिदम्। ता एहि। णिवेदेम्ह दाव भट्टिणीए संदेसं महाराअस्स। (ख) सहि एवं करेम्ह। (ग) जेदु जेदु भट्टा। भट्टा देवी आणवेदि—ण हि ण हि। विण्णवेदि। (घ) आः दासीएधीए। किं देवी आणवेदि। (ङ) एवं देवी विण्णवेदि—अज्ज क्खु मए मअरन्दोद्दाणे गदुअ रत्तासोअपाअवतले संठाविदस्स भअवदो कुसुमाउहस्स पूआ णिव्वत्तइदव्वा। तहिं अज्जउत्तेण संण्णिहिदेण होदव्वम्। (च) भो वअस्स ता उट्ठेहि। तहिं जेव गच्छम्ह जेण तहिं गदस्स ममावि बम्हणस्स सोत्थिवाअणं किंवि भविस्सदि।

---

हञ्जे इति चेटया चेटीं प्रति आह्वाने। लज्जां नाटयन्त्यौ इति। आज्ञापनं हि स्वापेक्षया निकृष्टं प्रति भवति। राज्ञ्या राजानं प्रति तदनुचितम्। अतो वाण्यास्तथा निर्गतत्वाल्लज्जानाटनम्। कुसुमायुधस्यार्थात्तत्प्रतिकृतेः। अन्य उत्सव उत्सवान्तरम्। मयूरव्यंसकादित्वादन्यार्थकान्तरशब्देन समासः। स चास्वपदविग्रहः। स्वस्ति वाच्यते अनेन इति स्वस्तिवाचनम्। यद्वा स्वास्तिवायनमिति संस्कृतम्।

---

१ सानन्दम्; सहर्षं विहस्य साद०. २ पतश्चाद्य...तदुच्यतां. ३ किं. ४ चूवलदिए सुट्ठु तुए सुमरिदं (स्मृतं) एदं। एहि त्वरम्ह. ५ किं त्ति देवी आणवेदित्ति. ६ भो उट्ठेहि। लहुं गच्छम्ह। ममा वि क्खु तहिं उज्जेव्व सोत्थिवाअणणिमित्तओ बहुमाणो भविस्सदि।

राजा—मदनिके गम्यतां देव्यै निवेदयितुमयमहमागत एव मकरन्दोद्यानमिति ।

उभे—यद्भर्ताऽऽज्ञापयति । ( इति निष्क्रान्ते । ) ( क )

राजा—वयस्य एहि । अवतरावः । ( उभौ प्रासादावतरणं नाट्यतः । ) वयस्य आदेशय मकरन्दोद्यानस्य मार्गम् ।

विदूषकः—यद्भवानाज्ञापयति । एत्वेतु भवान् । ( ख )

( उभौ परिक्रामतः । )

विदूषकः—( अग्रतोऽवलोक्य । ) भो एतत्तन्मकरन्दोद्यानम् । तदेहि । प्रविशावः । ( इति प्रविशतः । ) ( ग )

विदूषकः—( अवलोक्य सविस्मयम् । ) भो वयस्य प्रेक्षस्व प्रेक्षस्व । एतत्खलु तन्मलयमारुतान्दोलनप्रफुल्लसहकारमञ्जरीरेणुपटलप्रतिबद्धपटवितानं मत्तमधुकरमुक्तझंकारमिलितमधुरकोकिलारावसंगीतश्रुतिसुखं तवागमनदर्शितादरमिव मकरन्दोद्यान लक्ष्यते । तत्प्रेक्षतां भवान् । ( घ )

राजा—( समन्तादवलोक्य । ) अहो रम्यता मकरन्दोद्यानस्य । इह हि ।

---

( क ) जं भट्टा आणवेदि । ( ख ) जं भवं आणवेदि । एदु एदु भवं । ( ग ) भो एदं तं मअरन्दुज्जाणम् । ता एहि । पविसम्ह । ( घ ) भो वअस्स पेक्ख पेक्ख । एदं क्खु तं मलअमारुदान्दोलणपहुल्लन्तसहआरमञ्जरीरेणुपटलपडिबद्धपडवितानं [12] मत्तमहुअरमुत्तझङ्कारामिलिदमहुरकोइलाराव[13]संगीदसुदिसुहं तुहागमण[14]दंसितादरं विअ मअरन्दुद्दाणं लक्खीअदि । ता पेक्खदु भवं ।

---

मलयेति । मलयस्य मारुतो मलयमारुतस्तेन आन्दोलनं तेन प्रफुल्लन्त्यो याः सहकाराणामतिसौरभवतामाम्रवृक्षाणां मञ्जर्यस्तासां रेणवः परागास्तेषां पटलं तेन प्रतिबद्धं पटवितानं यस्मिन् । मत्ताश्च ते मधुकराश्च तैर्मुक्तः यः झंकारस्तेन मिलितो यः कोकिलारावः स एव संगीतं तेन श्रवणसुखम् । तवागमने दर्शित आदरो येन । तत्र इत्यस्य सापेक्षत्वेऽपि गमकत्वात्समासः । यद्वा त्वदागमनेति पठनीयम् ।

---

१ ०तुमहमा. २ वयस्य तदादेशय मार्गं मक ०स्य. ३ विलोक्य. ४ प्रवेशं नाटयतः. ५दृष्ट्वा. ६ मक० परा श्रीः. ७ ( अग्रतो भूत्वा ) एदु एदु भवं. ८ भट्टा. ९ भो भोः एदं मअ० । ता पविसदु भवं. १० महाराअ. ११ मारुदा-दोलिदमउलन्त ( मुकुलायमान ) सह०; मारुदंदोलिअपरिसरन्त-मण्डलन्त-पल्लविद. १२ मिलिद; समन्तदोपसुण्वन्तमत्त-महुअरणिवह०. १३ लालाव ( लालाप ) संगदिमुहरअं ( मुखरं ). १४ बहुमाणदंसि०.

उद्यद्विद्रुमकान्तिभिः किसलयैस्ताम्रां त्विषं बिभ्रतो
भृङ्गालीविरुतैः कलैरविशदव्याहारलीलाभृतः ।
घूर्णन्तो मलयानिलाहतिचलैः शाखासमूहैर्मुहु-
र्भ्रान्तिं प्राप्य मधुप्रसङ्गमधुना मत्ता इवामी द्रुमाः ॥ १७ ॥

अपि च ।

मूले गण्डूषसेकासव इव बकुलैर्वास्यते पुष्पवृष्ट्या
मध्वाताम्रे तरुण्या मुखशशिनि चिराच्चम्पकान्यद्य भान्ति ।
आकर्ण्याशोकपादाहतिषु च रणतां निर्भरं नूपुराणां
झंकारस्यानुगीतैरनुरणनमिवारभ्यते भृङ्गसार्थैः ॥ १८ ॥

---

उद्यदिति । अधुना संप्रति अमी द्रुमाः मधोः वसन्तस्य मधुनः मद्यस्य च प्रसङ्गं प्रकृष्टसंपर्कं प्राप्य मत्ताः पानक्षीबा इव भान्ति । भ्रान्तिमिति पाठे मधुप्रसङ्गः वसन्तसंपर्कस्तत्संबन्धि यन्मधु तेन भ्रान्तिमुन्मादं प्राप्य मत्ताः पानशौण्डा इव दृश्यन्ते इति शेषः । तदेव प्रतिपादयति । उद्यतां प्ररोहतां विद्रुमाणां प्रवालानां कान्तय इव कान्तयो येषां तैः किसलयैः । हेत्वर्थे तृतीया । ताम्रां त्विषं कान्तिं बिभ्रतो धारयन्तः । मधुमत्तोऽपि रक्तवर्णां त्विषं धारयति । कलैः अव्यक्तमधुरैः भृङ्गालीनां भ्रमरपङ्क्तीनां विरुतैः गुञ्जितैः हेतुभिः । अविशदः अस्पष्टः यो व्याहारः भाषितं तस्य लीलां बिभ्रतीति व्याहारलीलाभृतः । मधुमत्ता जना इव अस्पष्टं व्याहरन्त इत्यर्थः । तथा च मलयानिलस्य दक्षिणपवनस्य आहतिभिस्ताडनैः चलैः शाखासमूहैः मुहुः पुनः पुनः घूर्णन्तः भ्रमन्तः । उत्प्रेक्षालंकारः श्लेषश्च । शार्दूलविक्रीडितं वृत्तम् ॥१७॥

मूल इति । बकुलैः केसरवृक्षैः कर्तृभिः चिरात् मूले यः तरुण्याः गण्डूषसेकासवः स पुष्पवृष्ट्या वास्यते सुरभीक्रियते । यद्वा मूले गण्डूषसेकासवे सति बकुलैः पुष्पवृष्ट्या वास्यते आच्छाद्यते । अधःप्रदेश इति शेषः । तरुण्या मुखं एव शशी मुखशशी तस्मिन् मधुना आताम्रे ईषद्रक्ते सति । पटुमृदुहसनरूपदोहदप्रापणादित्यर्थः । चिराद्य चम्पकानि चम्पकपुष्पाणि भान्ति आविर्भवन्ति इत्यर्थः । चम्पकशब्दात् पुष्परूपविकारे विहितस्याणः 'पुष्पमूलेषु बहुलम्' इति लुप् । भृङ्गसार्थैः भ्रमरसमूहैश्च अशोकेषु याः पादाभ्यामाहतयः दोहदपूरणार्थं ताडनानि तासु निर्भरं रणतां क्वणतां नूपुराणां झंकारस्य शिञ्जितस्य आकर्ण्य अनुगीतैः अनुकरणमारभ्यत इव । अत्र कविसमयः— 'स्त्रीणां स्पर्शात्प्रियंगुर्विकसति बकुलः सीधुगण्डूषसेकात्पादाघातादशोकस्तिलककुरबकौ वीक्षणालिङ्गनाभ्याम् । मन्दारो नर्मवाक्यात्पटुमृदुहसनाच्चम्पको वक्त्रवाताच्चूतो गीतान्नमेरुर्विकसति च पुरो नर्तनात्कर्णिकारः ॥' इति । उत्प्रेक्षालंकारः । स्रग्धरा छन्दः । लक्षणमुक्तं

---

१ ताम्रास्त्विषः, ताम्रात्विषः. २ भृशं. ३ भ्रान्तिं. ४ जनितां. ५ रसतां, रसितं, रणितं. ६ स्याच्चगी०, गीतैरनुसरणं–गणनं. ७ वाभ्यस्यते.

विदूषकः—( आकर्ण्य[1] । ) भो वयस्य नैते मधुकरा नूपुरशब्दमनुहरन्ति । नूपुरशब्द एवैष देव्याः परिजनस्य । ( क )

राजा—वयस्य सम्यगु[2]पलक्षितम् ।

( ततः प्रविशति वासवदत्ता[3] काञ्चनमाला पूजोपकरणहस्ता[4] सागरिका विभवतश्च परिवारः । )

वासवदत्ता—हञ्जे काञ्चनमाले आदेशय मे मकरन्दोद्यानस्य मार्गम् । ( ख )

काञ्चनमाला—एत्वेतु भर्त्री । ( ग )

वासव०—( परिक्रम्य । ) हञ्जे काञ्चनमाले अथ कियद्दूरे स रक्ताशोकपादपो यत्र मया भगवतः कुसुमायुधस्य पूजा निर्वर्तयितव्या । ( घ )

काञ्चन०—भर्त्रि आसन्न एव । किं न प्रेक्षते भर्त्री । इयं खलु सा निरन्तरोद्भिन्नकुसुमशोभिनी भर्त्र्या परिगृहीता माधवी लता । एषाप्यपरा नवमालिका लता यस्या अकालकुसुमसमुद्गमश्रद्धालुना भर्त्राऽनुदिन-

---

( क ) भो वअस्स ण एदे महुअरा णेउँरसद्दं अणुहरन्ति । णेउरसद्दो ज्जेव्व एसो देवीए परिअणस्स । ( ख ) हञ्जे कञ्चणमाले आदेसहि मे मअरन्दुज्जाणस्स मग्गं । ( ग ) एदु एदु भट्टिणी[6] । ( घ ) हञ्जे कञ्चणमाले अध केत्तिअ दूरो सो रत्तासोअपादवो जहिं मए भअवदो कुसुमाउहस्स पूआ णिव्वत्तइदव्वा ।

---

प्राक् ॥ १८ ॥ उपलक्षितमवगतम् । पूजायाः उपकरणानि हस्ते यस्याः सा । 'हञ्जे हण्डे हलाह्वाने नीचां चेटीं सखीं प्रति' इत्यमरः । **निरन्तरेति** । निर्गतमन्तरं यस्मात्तद्यथा तथा निरन्तरं उद्भिन्नानि कुसुमानि तैः शोभते इति निरन्तरोद्भिन्नकुसुमशोभिनी । परिगृहीता आत्मीयत्वेन स्वीकृता । नवमालिका सप्तला ( वटमोगरी इति महाराष्ट्रीयभाषायां ख्याता ) । **अकालेति** । स्वकुसुमोत्पत्तिकालादन्यः कालः अकालः । तदन्यत्वं नञर्थः।'तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता' इति वचनात् । अकाले कुसुमानां

---

१ श्रुत्वा. २ गवधारितं, गवधार्यताम्. ३ उज्ज्वलवेषा वा०. ४ गृहीतपूजोपकरणा. ५ णिग्घोसमणुकरन्ति; सरान्ति; अणुहरन्दो ( हरन्तः ). ६ अस्मात्परं–( इति परिक्रामति । ) काञ्चन०—पेक्खदु भट्टिणी ग्गसमअकुसुमिअधिविहतरुलदापरिगाहिदमहुअरमुहरुग्गिदमअरन्दुज्जाणस्ससरीअदं । वास०—सुट्ठु दंसिदं । काञ्च०—एदं वि दाव आलोअदु भट्टिणी । कोमलकिसलअरत्तवसणमणहरा सहआरमञ्जरीगुच्छणिरन्तरणिलीणालिभरकेसपासा कलपरहुदविरुदालाविणी चूदकाणणे भमन्ती विअ वसन्तलच्छी । वास०—जं सच्चं अदिसअरमणीअदावक्खित्ताहिअआए मे दिट्ठी कहिं वि पदेसे पविभट्ठा ण णिवत्तादि । हञ्जे काञ्च० इ०. ७ दाणिं सो. ८ मअणस्स.

मायास्यत आत्मा। तदेतामतिक्रम्य दृश्यत एव स रक्ताशोकपादपो यत्र देवी पूजा निर्वर्तयिष्यति। (क)

वासव०—तदेहि। तत्रैव लघु गच्छामः। (ख)

काञ्चन०—एत्वेतु भर्त्री। (ग)

(सर्वाः परिक्रामन्ति।)

काञ्चन०—भर्त्रि अयं खलु स रक्ताशोकपादपो यत्र देवी पूजा निर्वर्तयिष्यति। (घ)

वासव०—तेन हि मे पूजानिमित्तान्युपकरणान्युपनय। (ङ)

साग०—(उपसृत्य।) भर्त्रि एतत्सर्वं सज्जम्। (च)

वासव०—(निरूप्य आत्मगतम्।) अहो प्रमादः परिजनस्य। यस्यैव दर्शनपथात्प्रयत्नेन रक्ष्यते तस्यैव दृष्टिगोचरे पतिता भवेत्। भवतु। एवं ताव-द्भणिष्यामि। (प्रकाशम्।) हञ्जे सागरिके कस्मात्त्वमद्य मदनमहोत्सवपराधीने

---

(क) भट्टिणि आसण्णो ज्जेव्व। किं न पेक्खदि भट्टिणी। इअं क्खु सा निरन्तरु-ब्भिण्णकुसुमसोहिणी भट्टिणीए परिगिहिदा माहवी लदा। एसा वि अवरा णोमालिआ लदा जाए[4] अआलकुसुमसमुग्गमसद्धालुगा भट्टिणा अणुदिणं आआसीअदि अप्पा। तां[5] एदं अतिक्कमिअ दीसदि ज्जेव सो रत्तासोअपाअवो जहिं देवी पूआं णिव्वत्तइस्सदि। (ख) ता एहि। तहिं ज्जेव्व लहु गच्छम्ह। (ग) एदु एदु भट्टिणी। (घ) भट्टिणि[6] अअं खु सो रत्तासोअपाअवो जहिं देवी पूआं णिव्वत्तइस्सदि। (ङ) तेण हि मे पूआणिमित्ताइं उवअरणाइं उवणेहि। (च) भट्टिणि एदं सव्वं सज्जम्।

---

समुद्गमः अकालकुसमसमुद्गमः तस्मिन् श्रद्धालुना विश्वासवता। 'स्पृहिगृहि'—इत्यादिना श्रच्छब्दोपपदे डुधाञ्धातोस्ताच्छील्ये आलुच्। आयास्यते कदा पुष्पोद्गमः स्यादिति चिन्तया खेदं नीयते। पूजानिमित्तानि पूजानिमित्तमेषामिति। उपक्रियते एभिरिति उपकरणानि। ल्युट् करणे। सज्जं संभृतम्। प्रमादः अनवधानता। दर्शनस्य पन्थाः दर्शनपथः तस्मात्। गावः इन्द्रियाणि चरन्त्यस्मिन्निति गोचरः विषयः। गोचरसंचरे-त्यादिना अधिकरणे घः। दृष्टेः गोचरे दृष्टिगोचरे। ०गोचरमिति पाठे दृष्टेः गोचरं यथा तथा। परस्मिन्नधि इति पराधीनः। मदनमहोत्सवेन पराधीनः तस्मिन्मदन-

---

१ इति परि०. २ सहसो०. ३ सागरिकां दृष्ट्वा. ४ जाए किदे—०कुसुमसद्धा०. ५ ०दिअहं (दिवसं). ६ ता एदु एदु देवी (इति परिक्रामन्ति). ७ वास०—अअं सो... जहिं अहं पूआं णिवत्तइस्सं। तेण हि—ता—मे पूआ० उवणेहि.

परिजने सारिकामुज्झित्वेहागता। तत्तत्रैव लघु गच्छ । एतदपि सर्वं पूजोपकरणं काञ्चनमालाया हस्ते समर्पय। ( क )

साग०—यद्भर्त्र्याज्ञापयति। ( इति तथा[1] कृत्वा कतिचित्पदानि गत्वा। आत्मगतम्। ) सारिका मया पुनः सुसंगताया हस्ते समर्पिता। एतदप्यस्ति मे प्रेक्षितुं कौतूहलं किं यथा तातस्यान्तःपुरे भगवाननङ्गोऽर्च्यते इहापि तथैव किमन्यथेति। तदलक्षिता भूत्वा प्रेक्षिष्ये। यावदिह पूजासमयो भवति तावदहमपि भगवन्तमनङ्गमेव पूजयितुं कुसुमान्यवचेष्यामि। ( इति कुसुमावचयं नाटयति। ) ( ख )

वासव०—काञ्चनमाले प्रतिष्ठापयाशोकमूले भगवन्तं प्रद्युम्नम्। (ग)

काञ्चन०—यद्भर्त्र्याज्ञापयति। (तथा करोति।) ( घ )

---

( क ) अहो पमाओ परि[3]अणस्स। जस्स ज्जेव दंस[4]णपधादो पअत्तेण रक्खीअदि तस्स ज्जेव दिट्ठिगोअरे पडिदा भवे। भोदु। एवं ताव भणिस्सम्। हञ्जे साअरिए कीस तुमं अज्ज मअण[5]महूस्सवपराहीणे परिअणे सारिअं उ[6]ज्झिअ इह आगदा। ता तहिं ज्जेव लहुं गच्छ। एदं[7] वि सव्वं पूओवअरणं कञ्चणमालाए हत्थे समप्पेहि। ( ख ) जं भट्टिणी आणवेदि। सारिआ मए उण सुसंगदाए हत्थे समप्पिदा। एदं वि अत्थि मे पेक्खिदुं कोदूहलं किं जहा तादस्स अन्तेउरे भअवं अणङ्गो अच्चीअदि इह वि तह ज्जेवं[9] किं अ णहेत्ति। ता अल[10]क्खिदा भविअ पेक्खिस्सम्। जाव इह पूआसमओ होइ ताव अहं पि भअ[11]वन्तं अणंगं ज्जेव पूअइदुं कुसुमाइं अवचिणि[12]स्सम्। ( ग ) कञ्चणमाले पडिट्ठावेहि असोअमूले भअवन्तं पज्जुण्णम्। ( घ ) जं भट्टिणी आणवेदि।

---

महोत्सवपराधीने। ०परिहीने इति पाठे ०त्सवेन परिहीने विरले। सारिका पक्षिविशेषः। लघु द्रुतम्। कुसुमानामवचयः कुसुमावचयस्तम्। 'हस्तादाने चेरस्तेये' इति घञि कृते अवचाय इति स्यात्। अत्र तु आदेयस्य प्रत्यासत्त्यभावाद्घञभाव इति समाधेयम्। अत्र—" वासवदत्ता-उपनय मे पूजोपकरणानि " इत्यारभ्य—"तदलक्षिता प्रेक्षिष्ये " इत्यन्तेन वासवदत्ताया रत्नावलीवत्सराजयोर्दर्शनप्रतीकारात्सारिकायाः सुसंगतार्पणेन अलक्षितप्रेक्षणेन च वत्सराजसमागमहेतोर्बीजस्योपादानात्समाधानं नाम मुखसंधेरङ्गम्।

---

१ काञ्चनमालाया अर्पयित्वा...पदानि दत्त्वा; काञ्चनमालां समर्प्य. २ नास्त्येतत्क्वचित्. ३ मे परि. ४ पधादेव इअं...ज्जेव कहं वि ०गोअरं गदा। ता भोदु...; गोअरं गदा भविस्सादि—भवे (विचिन्त्य). ५ मअ (मद) पराहीणपरिअणे इमस्सिं मअणमहूस्सवे. ६ मोत्तूण (मुक्त्वा). ७ एदं अ सव्वं कञ्च० ए सम०. ८ ०आ दाव. ९ ज्जेव आदु (अथ वा) अण्ण०. १० ०क्खिदा एव्व पे०; सिन्धुवारविडवान्तरिदा भविअ. ११ मअणं ज्जेव्व समच्चिदुं. १२ आणइस्सं.

विदू०—भो वयस्य यथा विश्रान्तो नूपुरशब्दस्तथा तर्कयामि आगता देव्यशोकमूलमिति । ( क )

राजा—(अवलोक्य[1]।) वयस्य सम्यगवधारितम्[2]। पश्येयं देवी या किलैषा

कुसुमसुकुमारमूर्तिर्दधती नियमेन तनुतरं मध्यम् ।
आभाति मकरकेतोः पार्श्वस्था चापयष्टिरिव ॥ १९ ॥

तदेहि । उपसर्पावः । ( उपसृत्य[4]। ) प्रिये वासवदत्ते ।

वासव०—( विलोक्य । ) कथमार्यपुत्रः । जयतु जयत्वार्यपुत्रः । एतदासनम् । अत्रोपविशत्वार्यपुत्रः । ( ख )

( राजा नाट्येनोपविशति । )

काञ्चन०—भर्त्रि स्वहस्तदत्तकुङ्कुमचर्चिकाशोभितं कृत्वा रक्ताशोकपादपमर्च्यतां भगवान्प्रद्युम्नः । ( ग )

वासव०—उपनय मे पूजोपकरणानि । ( घ )

( काञ्चनमालोपनयति । वासवदत्ता तथा[5] करोति । )

---

( क ) भो वअस्स जधा वीसन्तो[6] णेउरसद्दो तहा तक्केमि आअदा देवी असोअ-मूलंत्ति । ( ख ) कधं अज्जउत्तो । जअदु जअदु अज्जउत्तो । एदं आसणं । एत्थ उव-विसदु अज्जउत्तो । ( ग ) भट्टिणि सहत्थदिण्णकुङ्कुमचच्चिआसोहिदं कदुअ रत्तासोअ-पाअवं अच्चीअदु भअवं पज्जुण्णो । ( घ ) उवणेहि मे पूजोवअरणाइं ।

---

'बीजार्थस्योपगमनं तत्समाधानमुच्यते' इति तल्लक्षणम् । विश्रान्तः विरतः । अव-धारितं निश्चितम् । कुसुमेत्यादि । कुसुममिव सुकुमारा मूर्तिः यस्याः सा । यष्टिपक्षे कुसुमान्येव सुकुमारा मूर्तिर्यस्याः सा । मदनधनुषः पुष्पमयत्वात् । नियमेन उपवासादि-व्रतेन तनुतरमतिशयेन कृशं मध्यं कटिं पक्षे नियमेन तनुतरं पूर्वापरभागापेक्षया लघुतरं मध्यं दधती । मकरः केतुर्यस्य तस्य मकरकेतोः मदनस्य पार्श्वस्था तस्य चापयष्टिः धनुःकाण्डमिव आभाति । श्लेषानुप्राणितोत्प्रेक्षालंकारः । आर्या छन्दः ॥ १९ ॥ कथमिति संभ्रमे । 'कथं प्रश्ने प्रकारार्थे संभ्रमे संभवेऽपि च' इति हेमचन्द्रः । स्वहस्तेन स्वयात्महस्तेन दत्ता या कुङ्कुमस्य घुसृणस्य चर्चिका चर्चा तया शोभितं विभूषितम् ।

---

१ समन्तादव०; विलोक्य; वासवदत्तां दृष्ट्वा; ( दृष्ट्वा ) वयस्य इयं देवी येषा. २ गुप-लक्षितं. ३ कुसुम. ४ इत्युपसर्पतः. विदू०-( उपसृत्य ) सोत्थि भोदीए । काञ्च०-भट्टिणि सहत्थ०. विदू०-भो वअस्स एहि उपसप्पम्ह । राजा-क्षणं तिष्ठ। मा भूत्समाधिभङ्गो देव्याः। निर्वर्तयतु पूजां मन्मथस्य ।. ५ पूजयति. अस्मात्परं-विदू०-पेक्ख वअस्स अणंगं अच्चन्ती अहिअं सोहइ भट्टिणी । राजा०-सम्यगभिहितम् ।. ६ परिसन्तो ०खो...संपन्ना ( संप्राप्ता ) देवी ०पाअवसमीपे-समीपं. ७ अम्मो । कधं आअदो ज्जेव. ८ ०उत्तो । अलंकरेदु इमं देसं आसणपरिग्गहेण । एदं आसणं-इ०. ९ णाहिं विलेवणं चि.

राजा—प्रिये[1]।

प्रत्यग्रमज्जनविशेषविविक्तकान्तिः
कौसुम्भरागरुचिरस्फुरदंशुकान्ता।
विभ्राजसे मकरकेतनमर्चयन्ती
बालप्रवालविटपि[3]प्रभवा लतेव॥ २०॥

अपि च।

स्पृष्टस्त्वयैष[4] दयिते स्मरपूजाव्यापृतेन[5] हस्तेन।
उद्भिन्नापरमृदुतरकिसलय इव लक्ष्यतेऽशोकः॥ २१॥

अपि च।

अनङ्गोऽयमनङ्गत्वमद्य निन्दिष्यति[6] ध्रुवम्।
यदनेन न संप्राप्तः पाणिस्पर्शोत्सवस्तव॥ २२॥

काञ्चन०—भर्त्रि अर्चितो भगवान्प्रद्युम्नः। तत्कुरु भर्तुरुचितं पूजासत्कारम्। (क)

(क) भट्टिणि अच्चिदो भअवं पज्जुण्णो। ता करेहि भत्तुणो उइदं पूआसक्कारम्।

प्रत्यग्रेत्यादि। मकरकेतनं कामदेवमर्चयन्ती त्वं बाला नूतनाः प्रवालाः पल्लवा यस्य तादृशो विटपी वृक्षः स प्रभवः उत्पत्तिस्थानं यस्याः तादृशी लता इव विभ्राजसे शोभसे। तत्र साम्यं दर्शयति विशेषणद्वयेन। प्रत्यग्रमचिरवृत्तं यद् मज्जनं स्नानं तेन विशेषेण अधिकं विविक्ता उज्ज्वला कान्तिर्यस्याः सा तथोक्ता। पक्षे प्रत्यग्रं यन्मज्जनं जलेन सिञ्चनं तेन वि[शे]षेण विविक्ता पूता। स्वच्छेत्यर्थः। कान्तिर्यस्यास्तादृशी। पुनश्च कौसुम्भेन कुसुम्भपुष्पजन्येन रागेण रञ्जनद्रव्येण रुचिरं सुन्दरं यथा तथा स्फुरन् लसन् अंशुकान्तो यस्यास्तादृशी। पक्षे कौसुम्भं कुसुम्भपुष्पं तस्येव रागो लौहित्यं तेन रुचिरा चासौ स्फुरद्भिरंशुभिः किरणैः कान्ता रमणीया च सा तथोक्ता। उपमालंकारः। वसन्ततिलका वृत्तम्। उदाहृतमेतत्पद्यं काव्यप्रकाश उपमादोषप्रकरणे। अत्र लता विभ्राजते न तु विभ्राजसे इति संबोध्यमाननिष्ठस्य परभागस्य असंबोध्यमानाविषयतया व्यत्यासात्पुरुषभेदः इति भग्नप्रक्रमतादोषश्च दर्शितः। एतद्दोषवारणाय प्रिये इत्यनन्तरं भवती इति पदमध्याहृत्य विभ्राजते इति पठनीयम्॥ २०॥ स्पृष्ट इति। हे दयिते त्वया स्मरपूजायां व्यापृतेन व्यग्रेण हस्तेन स्पृष्टः अयमशोकः उत्पन्न उद्गतः अपरः विद्यमानेभ्यः अन्यः मृदुतरः किसलयः पल्लवः यस्य तथाविध इव लक्ष्यते। उत्प्रेक्षालंकारः। आर्यावृत्तम्॥ २१॥ अनङ्ग इति। अयं नास्ति अङ्गं यस्य सः अनङ्गः कामः। अद्य आत्मनः अनङ्गत्वं गात्ररहितत्वं ध्रुवं निश्चितं निन्दिष्यति। यत् यस्मात्कारणादनेन तव पाणिस्पर्शः तस्माद्य उत्सवः। स एव उत्सव इति वा। न संप्राप्तः। शिवेन भालस्थनेत्राग्निना दग्धाङ्गत्वादिति भावः। उत्प्रेक्षालंकारः॥२२॥

१ (निरूप्य) प्रिये। प्रिये वासवदत्ते. २ मूर्तिः. ३ विटप. ४ त्वयैव–यैक. ५ व्यापृतेन. ६ प्रिये. ७ त्वत्पाणिग्रहणोत्सवः. ८ भट्टिणि करेहि...समुइदं पू०.

वासव०—तेन हि उपनय मे कुसुमानि विलेपनं च । ( क )

काञ्चन०—भर्त्रि एतत्सर्वं सज्जम् । ( ख )

( वासवदत्ता नाट्येन राजानं पूजयति । )

सागरिका—( गृहीतकुसुमा । ) हा धिक् हा धिक् । कथं कुसुमलोभोत्क्षिप्तहृदययातिचिरमेव मया कृतम् । तद्यावदनेन सिन्धुवार-विटपेनापवारितशरीरा भूत्वा प्रेक्षे । ( तथा कृत्वा विलोक्य सविस्मयम् । ) कथं प्रत्यक्ष एव भगवान्कुसुमायुध इह पूजां प्रतीच्छति । अस्माकं तातस्यान्तःपुरे पुनश्चित्रगतोऽर्च्यते । तदहमपीह स्थितैवैभिः कुसुमै-र्भगवन्तं कुसुमायुधं पूजयिष्ये । ( कुसुमानि प्रक्षिप्य । ) नमस्ते भगवन्कु-सुमायुध अमोघदर्शनो मे इदानीं त्वं भविष्यसि । ( इति प्रणमति । ) दृष्टं यद्द्रष्टव्यम् । तद्यावन्न कोऽपि मां प्रेक्षते तावदेव गमिष्यामि । ( इति कतिचित्पदानि गच्छति । ) ( ग )

---

( क ) तेण हि उवणेहि मे[6] कुसुमाइं विलेवणं च । ( ख ) भट्टिणि एदं सव्वं सज्जं । ( ग ) ईद्धी हद्धी । कहं कुसुमलोहोक्खित्तहिअआए अदिच्चिरं जेव्व मए क्किदम् । ता जाव इमिणा सिन्दुवारविडवेण[9] ओवारिअसरीरा भविअ पेक्खामि । कहं पच्चक्खो[10] एव्व भअवं कुसुमाउहो इह पूआं पडिच्छेदि[11] । अम्हाणं तादस्स अन्ते-उरे उण चित्तगदो[12] अच्चीअदि । ता अहं वि इह त्थिदा ज्जेव्व इमेहिं कुसुमेहिं भअवन्दं कुसुमाउहं पूअइस्सं । णमो दे भअवं कुसुमाउह[13] अमोहदंसणो मे दाणिं तुमं भवि-स्ससि[14] । दिट्ठं जं दिट्ठव्वम् । ता जाव ण कोवि मं पेक्खदि तावज्जेव[15] गमिस्सम् ।

---

पूजा एव पूजारूपो वा सत्कारस्तम् । कुसुमानां लोभः तेन उत्क्षिप्तं हृदयं यस्याः । सिन्धुवारो निर्गुण्डीवृक्षः तस्य विटपेन शाखाविस्तारेण अपवारितमन्तर्हितं शरीरं यस्याः सा तथा । 'कथं प्रत्यक्ष एव' इत्यारभ्य 'पूजयिष्यामि' इत्यन्तेन परिभावनाख्यं मुखसंधे-रङ्गमुक्तम् । 'अनेन वत्सराजस्यानङ्गरूपतयापह्नवादनङ्गस्य च प्रत्यक्षस्य पूजाग्रहणस्य लोकोत्तरत्वादद्भुतरसावेशः परिभावना ।' इति दशरूपकम् । अमोघं सफलं दर्शनं यस्य तथाविधः । ममाभीष्टस्य संपादयितेत्यर्थः । 'नमस्ते...प्रेक्षते तावद्गमिष्यामि' इत्यने-

---

१ ०यति । सर्वे उपविशन्ति. २ दृष्ट्वा सवि०. ३ परिवृत्य कुसु०, इति पुष्पांजलिं गृहीत्वा; एतन्नास्ति क्वचित्. ४ ०मति. ५ परावृत्य पदद्वयं ददाति, निष्क्रामति. ६ दाव मे. ७ जं भट्टिणी आणवेदि । ( तथा करोति । ) वास०—उपविसदु अज्जो । ( राजा उपविशति । ). ८ अम्मो कुसुम०. ९ वारन्तरेण; विडवन्तेरण–विडवान्तरणवारिद-सरीरा–पेक्खिस्सम्. १० कहं पेक्खिदो ज्जेव्व अपुव्वो कुसुमाउहो. ११ पडिच्छदि । ता अहं वि...पूअइस्सं । ( पुष्पाणि क्षिपति । ). १२ ०अदि इह पच्चक्खीकिदो । तां अहं; चित्तगदो वा पडिमग्गओ भअवन्तो अणंगो पूअं पडिच्छइ; ०अदि । सव्वथा एत्थ अअं विसेसोत्ति. १३ ०उह सुभदंसणो मे भविस्ससि । दिट्ठं...। अमोघ-दंसणो मे भविस्ससि. १४ अस्मात्परं क्वचित्–अच्चरिअं अच्चरिअं । दिट्ठोवि पुणो पेक्खिदव्वो ता जाव इ०. १५ ताव तुरिदं.

काञ्चन०—आर्य वसन्तक एहि सांप्रतं त्वमपि स्वस्तिवाचनं प्रतीच्छ । ( विदूषक उपसर्पति । ) ( क )

वासव०—( विलेपनकुसुमाभरणदानपूर्वकम् । ) आर्य स्वस्तिवाचनं प्रतीच्छ । ( इत्यर्पयति । ) ( ख )

विदू०—( सहर्षं गृहीत्वा । ) स्वस्ति भवत्यै । ( ग )

( नेपथ्ये वैतालिकैः पठति । )

अस्तापास्तसमस्तभासि नभसः पारं प्रयाते रवा-
वास्थानीं समये समं नृपजनः सायंतने संपतन् ।
संप्रत्येषं सरोरुहद्युतिमुषः पादांस्तवासेवितुं
प्रीत्युत्कर्षकृतो दृशामुदयनस्येन्दोरिवोद्वीक्षते ॥ २३ ॥

( क ) अज्ज वसन्तअ एहि संपदं तुमं वि सोत्थिवाअणं पडिच्छ । ( ख ) अज्जे सोत्थिवाअणं पडिच्छ । ( ग ) सोत्थि भोदीए ।

मानन्तराङ्कप्रकृतनिर्विघ्नदर्शनारम्भणात्करणं नाम मुखसंधेरङ्गं दर्शितम् । आर्य—विदूषकस्य ब्राह्मणत्वादार्येति संबुद्धिः । 'आर्येति ब्राह्मणं ब्रूयात्' इति भरतः । प्रतीच्छ गृहाण । वैतालिकः विविधश्चासौ तालश्च वितालस्तेन चरतीति वैतालिकः । 'चरति' इति ठक् । वितालः प्रयोजनमस्य । 'प्रयोजनम्' इति ठञ् वा । अस्तेत्यादि । अस्ते अस्ताचले अपास्ताः निक्षिप्ताः समस्ताः भासः किरणा येन तादृशे रवौ नभसः पारं प्रयाते । सायंतने सायंभवे । सायंचिरमित्यादिना ट्युप्रत्ययस्तुडागमश्च । समये आस्थानीं राजसभाम् । आतिष्ठन्त्यस्यामिति आस्थानी । अधिकरणे ल्युट् । टित्वान्ङीप् । संपतन् युगपत्प्राप्नुवन् एष पुरो दृश्यमानः नृपजनः संप्रति अधुना दृशां नयनानां प्रीत्युत्कर्षकृतः प्रीतेः आनन्दस्य उत्कर्षोऽतिशयस्तं करोतीति तस्य । उद् ऊर्ध्वमयनं गमनं यस्य तस्य उदयनस्य उदयमानस्येत्यर्थः । इन्दोश्चन्द्रस्य सरोरुहद्युतिमुषः सरोरुहाणां पद्मानां द्युतिं कान्तिं मुष्णन्ति हरन्तीति तथोक्तान् । चन्द्रोदये तेषां निमीलनात् । पादान् मयूखान् इव दृशां प्रीत्युत्कर्षकृतः । सम्यक्पालनेन प्रजानामानन्दजननादिति भावः । उदयनस्य एतन्नामकनृपतेस्तव । उदेष्यमाणस्येत्यपि ध्वनिः । सरोरुहद्युतिमुषः कमलतुल्यकान्तीन् पादानासेवितुमुद्वीक्षते उन्मुखः प्रतीक्षते इत्यर्थः । श्लेषाश्रय उपमालंकारः अनुप्रासश्च । शार्दूलविक्रीडितं वृत्तम् । अत्र वैतालिकमुखेन चन्द्रतुल्यवत्सराजगुणवर्णनया सागरिकायाः समागमहेत्वनुरागबीजानुगुण्येनैव विलोभनाद्विलोभनमिति । तथा च कुसुमायुधव्यपदेशगूढस्य वत्सराजस्यात्र उदयनस्येत्यमेन उद्भेदनाद् उद्भेद इति च मुखसंधेरङ्गद्वयमुक्तम् ॥ २३ ॥ कथमिति विस्मये । परस्य

१ ०मानि गृहीत्वा. २ ०लिकैः पठ्यते. ३ त्येव. ४ ०मुखः. ५ प्रत्यु०, कृतां दृशां, कृतो दृशां. ६ अज्ज एदं सो०; अज्ज वसन्तअ गहाण इदं सोत्थि०.

सागरिका—( श्रुत्वा सहर्षं परिवृत्य राजानं सस्पृहं पश्यन्ती । ) कथमयं स राजा उदयनो यस्याहं तातेन दत्ता । ( दीर्घं निःश्वस्य । ) तत्परप्रेषण-दूषितमपि मे जीवितमेतस्य दर्शनेनेदानीं बहुमतं संवृत्तम् । ( क )

राजा—अये कथमुत्सवापहृतचेतोभिः संध्यातिक्रमोऽप्यस्माभि-र्नोपलक्षितः । संप्रति परिणतमहः । देवि पश्य ।

उदयतटान्तरितमियं प्राची सूचयति दिङ्निशानाथम् ।
परिपाण्डुना मुखेन प्रियमिव हृदयस्थितं रमणी ॥ २४ ॥

देवि तदुत्तिष्ठ । आवासाभ्यन्तरमेव प्रविशावः । ( सर्वे उत्थाय परिक्रामन्ति । )

सागरिका—कथं प्रस्थिता देवी । भवतु । तदहमपि त्वरितं गमि-ष्यामि । ( राजानं सस्पृहं दृष्ट्वा । निःश्वस्य । ) हा धिक् हा धिक् । मन्द-भागिन्या मया प्रेक्षितुमपि चिरं न पारितोऽयं जनः । ( इति राजानं पश्यन्ती निष्क्रान्ता । ) ( ख )

---

( क ) कहं अअं सो राआ उदअणो जस्स अहं तादेण दिण्णा । ता परप्पेसण-दूसिदं पि मे जीविदं एदस्स दंसणेण दाणिं बहुमतं संवुत्तम् । ( ख ) कधं पत्थिदा देवी । भोदु । ता अहंवि तुरिदं गमिस्सम् । हद्धी हद्धी । मन्दभाइणीए मए पेक्खिदुमपि चिरं ण पारिदो अअं जणो ।

---

प्रेषणं प्रेरणं पराज्ञानुष्ठानमिति यावत् । तेन दूषितम् । अत्र सागरिकायाः सुखागम-प्राप्तिरूपं मुखसंधेरङ्गम् । उत्सवेनापहृतमाकृष्टं चेतो येषां तैः । अन्यस्मिंश्चिदचेतयद्भि-रित्यर्थः । उदयेत्या॰दि । रमणी विरहिणीति शेषः । परिपाण्डुना मुखेन हृदयाभ्यस्तं प्रियमिव प्रियं यथा सूचयति तथा इयं प्राची दिग् उदयस्य उदयाचलस्य तटेन अन्तरित छन्नं निशानाथं चन्द्रं सूचयति । उपमालंकारः । आर्या ॥ २४ ॥

---

१ आकर्ण्य सोद्वेगम्; दृष्ट्वा सलज्जम्. २ ( ऊर्ध्वमवलोक्य, सर्वतोऽवलोक्य ) अये. ३ चेतसा...क्रमो मया. ४ परिकल्पितः. ५ नास्त्येतन्क्वचित्. ६ तथा हि. ७ उदयगिरि-तटान्तरितं–तटस्थगितं–प्राची. ८ तरुणी. ९ तदेहि, तदुत्तिष्ठावः. १० उत्तिष्ठन्ति. ११ इति राजानं विलोक्य सकरुणं निःश्वस्य; राजानं सस्पृहमालोकयन्ती नि॰. १२ इति निष्क्रान्ता; साभिलाषमालोकयन्ती नि॰. १३ सो ॰अणो वत्सराओ. १४ पोसण. १५ गदा देवी ता तुरिदं एव्व; उट्ठिदा देवी । अहं वि तुरिदं. १६ कधं मन्द॰; णं मए मन्दभाअधेआए चिरं पेक्खिदुं ण पारिदं; कधं मन्दभाआए अदिचिरं पेक्खिदुं ण पारिअदि.

राजा—( परिक्रामन् । )

देवि त्वन्मुखपङ्कजेन शशिनः शोभातिरस्कारिणा
पश्याब्जानि विनिर्जितानि सहसा गच्छन्ति विच्छायताम् ।
श्रुत्वा त्वत्परिवारवारवनितागीतानि भृङ्गाङ्गना
लीयन्ते मुकुलान्तरेषु शनकैः संजातलज्जा इव ॥ २५ ॥

( इति निष्क्रान्ताः सर्वे । )

इति मदनमहोत्सवो नाम प्रथमोऽङ्कः ।

---

आवासाभ्यन्तरं गृहान्तर्भागम् । देवीति । हे देवि पश्य । अब्जानि शशिनः शोभातिरस्कारिणा शोभां श्रियं तिरस्करोति प्रत्यादिशतीति तेन । 'सुप्यजातौ णिनिः' इति णिनिः । तव मुखमेव पङ्कजं तेन त्वन्मुखपङ्कजेन विनिर्जितानि अभिभूतानि सन्ति । सहसा अकस्मात् । विगता छाया कान्तिर्येषां तानि विच्छायानि तेषां भावो विच्छायता तां गच्छन्ति । परतिरस्कृतिजन्यविमनस्कतयेति भावः । तथा च तव परिवाराश्च ताः वारवनिताः गणिकाश्च तासां गीतानि श्रुत्वा भृङ्गाङ्गना भ्रमर्यः संजातलज्जा इव शनकैः मुकुलानां कमलकुड्मलानामन्तरेषु गर्भेषु लीयन्ते गूढास्तिष्ठन्ति । अत्र प्रतीपहेत्वलंकारयोरुत्प्रेक्षया संकरः । शार्दूलविक्रीडितं छन्दः ॥ २५ ॥ निष्क्रान्ताः सर्वे इति । तदुक्तं दशरूपके ' एकाहाचरितैकार्थमित्थमासन्ननायकम् । पात्रैस्त्रिचतुरैरङ्कं तेषामन्तेऽस्य निर्गमः ॥ ' इति ।

इति रत्नावलीटीकायां प्रथमोऽङ्कः ॥ १ ॥

---

१ छाया०. २ ते. ३ कुसुमा०. ४ प्रथमोऽङ्कः समाप्तः; रत्नावलीनामप्रधाननाटिकायां प्र०.

## द्वितीयोऽङ्कः ।

( ततः प्रविशति सारिकापञ्जरव्यग्रहस्ता सुसंगता । )

सुसंगता—हा धिक् हा धिक् । कुत्रेदानीं मम हस्ते सारिकापञ्जरं निक्षिप्य गता मे प्रियसखी सागरिका । तत्क पुनरेनां प्रेक्षिष्ये । ( अग्रतोऽवलोक्य । ) कथमेषा खलु निपुणिकेत एवागच्छति । तद्यावदेनां प्रक्ष्यामि । ( क )

( ततः प्रविशति निपुणिका । )

निपुणिका—( सविस्मयम् । ) आश्चर्यमाश्चर्यम् । अनन्यसदृशः प्रभावो मन्ये देवतायाः । उपलब्धः खलु मया भर्तुर्वृत्तान्तः । तद्गत्वा भट्टिन्यै निवेदयिष्यामि । ( इति परिक्रामति । ) ( ख )

सुसं०—( उपसृत्य । ) सखि निपुणिके क्वेदानीं त्वं विस्मयोत्क्षिप्तहृदयेव इह स्थितां मामवधीर्येतोऽतिक्रामसि । ( ग )

निपु०—कथं सुसंगता । हला सुसंगते सुष्ठु त्वया ज्ञातम् । एतत्खलु मम विस्मयस्य कारणम् । अद्य किल भर्ता श्रीपर्वतादागतस्य श्रीखण्डदासनामधेयस्य धार्मिकस्य सकाशादकालकुसुमसंजननदोहदं शिक्षि-

---

( क ) हद्धी हद्धी । कहिं[1] दाणिं मम हत्थे सारिआपञ्जरं णिक्खिविअ गदा मे पिअसही साअरिआ । तं[2] कहिं पुण एणं पेक्खिस्सम् । कहं एसा खु णिउणिआ इदो ज्जेव आअच्छदि । ता जाव एदं[3] पुच्छिस्सम् । ( ख ) अच्चरिअं अच्चरिअं । अणण्णसदिसो पभावो मण्णे देवदाए । उवलद्धो खु मए भट्टिणो वुत्तन्तो । ता गदुअ भट्टिणीए णिवेदइस्सम् । ( ग ) सहि णिउणिए कहिं दाणिं तुमं विम्हअोक्खित्तहिअआ विअ इह ठ्ठिदं मं अवधीरिअ इदो अदिक्कामसि ।

---

अथ प्रथमाङ्कोपक्षिप्तस्य सागरिकाया वत्सराजदर्शनोत्पन्नस्य रत्याविर्भावस्योचितविभावानुभावादिभिः परिपोषार्थं परस्ताद्ग्रन्थमारभमाणः कविर्द्वितीयाङ्के नायिकायाः सागरिकायाः प्रवेशसूचनार्थमादौ प्रवेशकमारभते—तत इत्यादिना । सारिकायाः पञ्जरे व्यग्र आसक्तः हस्तो यस्याः सा सारिकापञ्जरव्यग्रहस्ता । अवधीर्य विगणय्य । अनालोक्य अतिक्रम्य पुरस्ताद्गमनादिति भावः । कथमिति संभ्रमे अकस्माद्दर्शनात् । श्रीपर्वतः श्रीशैलः । धर्मं चरतीति धार्मिकः साधुः । ठक् प्रत्ययः । योग्यादन्यः कालः अकालः । तदन्यत्वं नञोऽर्थः । अकाले यत्कुसुमानां

---

१ गृहीतपअरा. २ निरूप्य. ३ सहर्षम्; अस्मादारभ्य 'मन्ये देवतायाः' इत्यन्तः ग्रन्थः नास्ति क्वचित्. ४ अथ कहिं, कहिं उण. ५ ०आ भविस्सदि. ६ भोदु अण्णेस्सम्मि. ७ एदं पडिवालिअ ( प्रतिपाल्य ) पु०. ८ गदुअ जाव. ९ हला. १० गुरुआविम्हआक्खित्त. ११ पिअसहि वि मं. १२ कुदो; अण्णदो गच्छासि.

त्वामात्मनः परिगृहीतां नवमालिकां कुसुमसमृद्धिशोभितां करिष्यतीति तत्रैतं वृत्तान्तं ज्ञातुं देव्या प्रेषितास्मि । त्वं पुनः कुत्र प्रस्थिता । ( क )

सुसंगता—प्रियसखीं सागरिकामन्वेष्टुम् । ( ख )

निपुणिका—सखि दृष्टा मया ते प्रियसखी सागरिका गृहीतचित्रफलकवर्तिकासमुद्गका समुद्विग्नेव कदलीगृहं प्रविशन्ती । तद्गच्छ त्वम् । अहमपि देव्याः सकाशं गमिष्यामि । ( ग )

( निष्क्रान्ते[1] । )

प्रवेशकः

( ततः प्रविशति[2] गृहीतचित्रफलकवर्तिका मदनावस्थां नाटयन्ती सागरिका । )

सागरिका—( निःश्वस्य[3] । ) हृदय प्रसीद प्रसीद । किमनेनायासमात्रफलेन दुर्लभजनप्रार्थनानुबन्धेन । अन्यच्च । येनैव दृष्टेन त ईदृशः

---

( क ) कधं[4] सुसंगदा । हला सुसंगदे सुठ्ठु तुए जाणिदं । एदं क्खु मम विम्हअस्स कारणम् । अज्ज किल भट्टा सिरिपव्वतादो आअदस्स सिरिखण्डेदासणामधेअस्स धम्मिअस्स सआसादो अकालकुसुमसंजणणदोहलअं सिक्खिअ[5] अत्तणो पडिगिहीदं णोमालिअं कुसुमसमिद्धिसोहिदं करिस्सादित्ति[6] तहिं एदं वुत्तान्तं जाणिदुं देवीए पेसिदम्हि । तुमं उण कहिं पत्थिदा[7] । ( ख ) पिअसहिं साअरिअं अण्णेसिदुम् । ( ग ) सहि[8] दिट्ठा मए[9] दे पिअसही साअरिआ[10] गहिदचित्तफलकवत्तिआसमुग्गआ समुव्विग्गा विअ कदलीघरअं पविसन्ती । ता गच्छ[11] तुमं । अहं पि देवीए सआसं गमिस्सम्[12] ।

---

संजननमुत्पत्तिः तस्य । दोहं ददातीति दोहदः । 'आतोऽनुपसर्गे' कः इति कः । पुष्पोत्पत्तिसाधनं किंचित् । तम् । 'तरुगुल्मलतादीनामकाले कुशलैः कृतम् । पुष्पाद्युत्पादकं द्रव्यं दोहदं स्यात्तु तत्क्रिया ॥ ' इति शब्दार्णवः । कुसुमानां समृद्धिः विपुलता तया शोभिताम् । गृहीतः चित्रफलकः वर्तिका तूलिका तस्याः समुद्गकः संपुटकः च यया सा तथोक्ता । समुद्विग्ना विमनस्का । प्रवेशक इति । एतल्लक्षणं–'प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः । अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा ॥ ' इति । हृदय प्रसीदेति । इतः प्रतिमुखसंधिः । ' अत्र वत्सराजसागरिकासमागमहेतोरनुरागबीजस्य प्रथमाङ्कोपक्षिप्तस्य सुसंगताविदूषकाभ्यां ज्ञायमानतया किंचिल्लक्ष्यस्य वासवदत्तया च चित्रफलकवृत्तान्तेन किंचिदुन्नीयमानस्य दृश्यादृश्यरूपतयोद्भेदः प्रतिमुखसंधिः । ' इति दशरूपकम् । आयासः खेद एव आयाममात्रम् । मयूरव्यसकादिः । तत्फलं

---

१ इति–उभे–नि०. २ प्रविशत्युपविष्टा मद०. ३ सकरुणं नि०. ४ ( विलोक्य ) कहं. ५ कण्ठ, खण्डदास०. ६ ०अ तेण. ७ स्सादि । ता तुम दाणिं कहिं प०. ८ सहिं; हला णिउणिए पिअं०. ९ मए साअ०. १० रिआ. सुसं०-कहिं । निपु०-दिट्ठा गहीद. ११ गच्छ पिअसहिं, ०सआसं एव्व; ता गच्छदु पिअसही । अहं वि एदं वुत्तन्तं गदुअ देवीए णिवेदेम्हि. १२ गच्छामि.

संतापो ननु वर्धते तमेव पुनरपि प्रेक्षितुमभिलषसीत्यहो ते मूढता। कथं चातिनृशंस जन्मतः प्रभृति सहसंवर्धितामिमं जनं परित्यज्य क्षणमात्रदर्शनपरिचितं जनमनुगच्छन्न लज्जसे। अथ वा कस्तव दोषः। अनङ्गशरपतनभीतेन त्वयैवमद्य व्यवसितम्। (सास्रम्[1]।) भवतु। अनङ्गं तावदुपालप्स्ये। (अञ्जलिं बद्ध्वा[2]।) भगवन्कुसुमायुध निर्जितसकलसुरासुरो भूत्वा स्त्रीजनं प्रहरन्कथं न लज्जसे। (विचिन्त्य।) अथ वा अनङ्गोऽसि। (दीर्घं निःश्वस्य।) सर्वथा मम मन्दभागिन्या मरणमेवानेन दुर्निमित्तेनोपस्थितम्। (फलकमवलोक्य।) तद्यावन्न कोऽपीहागच्छति तावदालेख्यसमर्पितं तमभिमतं जनं प्रेक्ष्य यथासमीहितं करिष्यामि। (सावष्टम्भमेकमना भूत्वा नाट्येन फलकं गृहीत्वा[3] निःश्वस्य।) यद्यपि मेऽतिसाध्वसेन वेपतेऽयमतिमात्रमग्रहस्तस्तथापि नास्ति तस्य जनस्यान्यो दर्शनोपाय इति यथातथालिख्यैनं प्रेक्षिष्ये। (इति नाट्येन लिखति।) (क)

---

(क) हिअअ पसीद[4] पसीद। किं इमिणा आआसमेत्तफलेण दुल्लहजणप्पत्थणाणुबन्धेण। अण्णं च। जेण एव्व दिट्ठेण[5] दे ईदिसो संतावो णं वड्ढदि[6] तं एव्व पुणो वि पेक्खिदुं अहिलससित्ति अहो दे मूँढदा[7]। कहं[8] अ अदिनिसंस जम्मदो पहुदि सहसंवड्ढिदं इमं जणं परिच्चइअ[9] खणमेत्तदंसणपरिचिदं जणं अणुगच्छन्तो ण लज्जसि। अह वा को तुह दोसो। अणङ्गसरपेडण[11]भादेण तुए एव्वं अज्ज व्ववसिदम्[12]। भोदु। अणङ्गं दाव उआलहिस्सं। भअवं कुसुमाउह णिज्जिअसअलसुरासुरो भविअ इत्थिआ[13]जणं पहरन्तो कधं ण लज्जसि। अह वा अणङ्गोसि। सव्वहा[14] मम मन्दभाइणीए मरणं[15] एव्व इमिणा दुण्णिमित्तेण उवत्थिदम्। ता जाव ण को वि इह आअच्छदि ताव आलेक्ख[16]समप्पिदं तं अहिमदं जणं पेक्खिअ जहा[17]समीहिदं करिस्सम्। जइ वि

---

यस्य स आयासमात्रफलस्तेन। दुर्लभश्चासौ जनश्च दुर्लभजनः वत्सराजरूपः तस्य प्रार्थना अभिलाष इति यावत्। तस्या अनुबन्धः तेन। क्षणमेव क्षणमात्रं क्षणमात्रं यद्दर्शनं तेन परिचितस्तम्। व्यवसितमाचरितम्। उपालप्स्ये दोषं दास्यामि इत्यर्थः। निर्जिताः सकलाः सुरा असुराश्च येन स तथोक्तः। अनङ्गोऽसीति। अतः शरीरराहित्यादन्तःकरणाभावादुचित एव ते लज्जाभाव इत्याशयः। मन्दः भागोऽस्या अस्तीति मन्दभागिनी दुर्भाग्या तस्याः। यथासमीहितं समाहितमनतिक्रम्य वर्तते इति।

---

१ सास्रा, सास्रमञ्जलिं बद्ध्वा. २ बद्ध्वा जानुभ्यां स्थित्वा. ३ ०त्वाग्रहस्तकम्पं नाटयन्ती निं०. ४ समस्सस समस्सस. ५ ०ण अअं. ६ ०दि (सविस्मयं) पुणो वि तं एव्व. ७ ०दा णिल्लजदा अ. ८ अइ णिसंस हिअअ. ९ मं परि...अण्णं जणं. १० परिहरिअ. ११ खण्डण. १२ अज्झवसिदं (अध्यवसितं). १३ इत्थिजणे. १४ सव्वहा मरणं एव्व मे इमिणा णि. १५ अवस्सं म०. १६ क्खगदं तं जणं कदुअ. १७ जहा स० तहा.

( ततः प्रविशति सुसंगता । )

**सुसं०**—एतत्तत्कदलीगृहम् । तत्प्रविशामि ।( प्रविश्याग्रतो विलोक्य सविस्मयम् । ) एषा मे प्रियसखी सागरिका । किं पुनरेषा गुरुकानुरागोत्क्षिप्तहृदयेव किमप्यालिखन्ती न मां प्रेक्षते । भवतु । तद्यावदस्या दृष्टिपथं परिहृत्य निरूपयिष्यामि किमेषाऽऽलिखतीति ।( स्वैरं पृष्ठतोऽस्याः स्थित्वा दृष्ट्वा सहर्षम् । ) कथं भर्तालिखितः । साधु सागरिके साधु । अथ वा न कमलाकरं वर्जयित्वा राजहंस्यन्यत्राभिरमते । ( क )

**साग०**—आलिखितः खलु मयैषः । किं पुनरनवरतनिपतद्बाष्पसलिलेन न मे दृष्टिः प्रेक्षितुं प्रभवति । ( मुखमुत्तानीकृत्याश्रूणि निवारयन्ती सुसंगतां दृष्ट्वोत्तरीयेण फलकं प्रच्छादयन्ती सविलक्षस्मितम् । ) कथं प्रियसखी सुसंगता । सखि इत उपविश । ( ख )

**सुसं०**—( उपविश्य बलात्फलकमाकृष्य । ) सखि क एष त्वयाऽत्रालिखितः । ( ग )

---

मे अदिसद्धसेण वेवदि अअं अतिमेत्तं स्रग्गहत्थो तहां वि णत्थि तस्स जणस्स अण्णो दंसणोवाओ त्ति जहातहा आलिहिअ णं पेक्खिस्सम् ।

( क ) एदं तं कदलीघरअम् । ता पविसामि । एसा मे पिअसही साअरिआ । किं उण एसा गुरुआणुराओक्खित्तहिअआ विअ किंवि आलिहन्ती ण मं पेक्खदि । भोदु । ता जाव से दिट्ठिपहं परिहरिअ णिरूवइस्सं किं एसा आलिहदित्ति । कहं भट्टा आलिहिदो । साहु साअरिए साहु । अह वा ण कमलाअरं वज्जिअ राअहंसी अण्णहिं अहिरमदि । ( ख ) आलिहिदो खु मए एसो । किं उण अणवरदणिवडन्तबाप्फसलिलेण ण मे दिट्ठी पेक्खिदुं पभवति । कहं पिअसही सुसंगदा । सहि इदो उवविश । ( ग ) सहि को एसो तुए एत्थ आलिहिदो ।

---

अग्रश्चासौ हस्तश्च अग्रहस्तः इति समानाधिकरणः समासः । अवयवावयविनोरभेदात्सामानाधिकरण्यम् । 'हस्ताग्राग्रहस्तयोर्गुणगुणिनोर्भेदाभेदात्' इति वामनः । यथातथा यथाकथंचित् । भर्ता उदयन इत्यर्थः । न कमलाकरमित्यादि । वत्सराज एवोचितस्तवानुराग इति भावः । अनवरतं यथा तथा निपतद्यद्बाष्पसलिलं तेन । हेतौ तृतीया । ०सलिलेति पाठे ०सलिलं यस्याः सा तथोक्ता । उत्तानीकृत्य ऊर्ध्वं कृत्वा ।

---

१ प्रवेशं नाटयति । अग्र०; प्रविश्यावलोक्य, प्रविश्य सागरिकां दृष्ट्वा. २ पश्यति. ३ विधारयन्ती, संहरन्ती; उत्तानीकृत्य सुसंगतां दृष्ट्वा मुखं परावृत्याश्रूणि सारयन्ती उत्तरीयेण फलकं पिधातुमिच्छन्ती सलज्जा. ४ स्मितं कृत्वा. ५ कं गृहीत्वा दृष्ट्वा च; ( उपविश्यात्मगतं ) कहं मं पेक्खिअ फलहको छादितो; एसा मं पेक्खिअ विलक्खा होदि; एवं दाव । ( प्रकाशं फलकं गृहीत्वा–दृष्ट्वा प्रकाशं ) सहि दंसेहि ( दर्शय ) को उण आलिहिदो । कहं ण सुणादि । हला पिअसहि णं भणामि साअरिए को एसो तुए आलिहिदोत्ति. ६ तं जहा०आलिखिस्सम्. ७ एदं क्खु. ८ अध पुण एसा गुरुअरा( तरा )णुराअखिन्न० समीवगदं वि मं. ९ भोदु भोदु । दिट्ठि० से प०. १० एसाए भट्टा. ११ एत्थ चित्तफलए.

**साग०**—( सलज्जम् । ) सखि प्रवृत्तमदनमहोत्सवे भगवाननङ्गः।(क)

**सुसं०**—( सस्मितम् । ) अहो ते निपुणत्वम् । किं पुनः शून्यमिवैतच्चित्रं प्रतिभाति । तदहमप्यालिख्य रतिसनाथं करिष्यामि । ( वर्तिकां गृहीत्वा नाट्येन रतिव्यपदेशेन सागरिकां लिखति । ) ( ख )

**साग०**—( विलोक्य सासूयम् । ) सुसंगते कस्मात्त्वयाहमत्रालिखिता । ( ग )

**सुसं०**—( विहस्य । ) सखि किमकारणं कुप्यसि । यादृशस्त्वया कामदेव आलिखितस्तादृशी मया रतिरालिखिता । तदन्यथासंभाविनि किं तवैतेनालपितेन । कथय तावत्सर्वं वृत्तान्तम् । ( घ )

**साग०**—( सलज्जा स्वगतम् । ) ननु ज्ञातास्मि प्रियसख्या । ( सुसंगतां हस्ते गृहीत्वा प्रकाशम् । ) प्रियसखि महती खलु मे लज्जा । तत्तथा कुरु यथा न कोऽप्यपर एतं वृत्तान्तं जानाति । ( ङ )

**सुसं०**—सखि मा लज्जस्व। ईदृशस्य कन्यारत्नस्यावश्यमेवेदृशे वरे अभिलाषेण भवितव्यम् । तथापि यथा न कोऽप्यपर एतं वृत्तान्तं ज्ञास्यति

---

( क ) सहि पउत्तमअणमहूसवे भअवं अणङ्गो। ( ख ) अहो दे णिउणत्तणम्। किं पुण सुण्णं विअ एदं चित्तं पडिभादि । ता अहं पि आलिहिअ रतिसणाहं करिस्सम् । ( ग ) सुसंगदे कीस तुए अहं एत्थ आलिहिदा । ( घ ) सहि किं अआरणं कुप्पसि । जादिसो तुए कामदेवो आलिहिदो तादिसी मए रइ आलिहिदा । ता अण्णधासंभाविणि किं तुह एदिणा आलविदेण । कहेहिं दाव सव्वं वुत्तन्तम् । ( ङ ) णं जाणिदम्हि पिअसहीए । पिअसहि महदी क्खु मे लज्जा । ता तहा करेसु जहा ण को वि अवरो एदं वुत्तन्तं जाणेदि ।

---

अकारणं असति कारण इत्यर्थः । अविद्यमानं कारणं यस्मिन् तदकारणं तस्मिन् विषये । अकारणमिति पाठः साधीयान् । अन्यथा वास्तवादन्यप्रकारेण संभावयति कल्पयति इति उपपदसमासः । सुप्यजातौ इति णिनिः । ज्ञातास्मि मदनकृतैवेयं ममावस्था इति ज्ञातमिति तात्पर्यम् । ईदृशस्य त्यदादिषु इत्यादिना इदंशब्दे उपपदे दृशेः कञ्-

---

१ ( विचिन्त्य फलकं दर्शयन्ती ) सहि पउत्ते इ०. २ फलकं गृहीत्वा नाट्येन लिखति. ३ निर्वर्ण्य; सासूयं–सक्रोधं, सलज्जम्. ४ सुसंगताया हस्तं; प्रका०–सास्रम्. ५ पेक्खामि; एदं आलिहिदं. ६ सहि मा कुप्प ।...तुए अअं काम०—रइत्ति. ७ अण्णसम्भा०; असम्भाविणि ( असद्भाविनि ) किं इमिणा । कहेहि दाव एतं; इमिणा सम्भमेण; सव्वंसच्चं. ८ तं जाणिदं ज्जेव ( तज्ज्ञातमेव ).

तथा करोमि। एतया पुनर्मेधाविन्या सारिकयात्र कारणेन भवितव्यम्। कदाप्येषास्यालापस्य गृहीताक्षरा भूत्वा कस्यापि पुरतो मन्त्रयिष्यते। (क)

साग०—तत्किमिदानीमत्र करिष्यामि। अतोऽप्यधिकतरं मे संतापो वर्धते। (मदनावस्थां नाटयति।) (ख)

सुसं०—(सागरिकाया हृदये हस्तं दत्त्वा।) सखि समाश्वसिहि समाश्वसिहि। यावदस्या दीर्घिकाया नलिनीपत्राणि मृणालिकाश्च गृहीत्वा लघ्वागच्छामि। (निष्क्रम्य पुनः प्रविश्य च नाट्येन नलिनीपत्रैः शयनीयं मृणालैर्वलयानि च रचयित्वा परिशिष्टानि नलिनीपत्राणि सागरिकाया हृदये निक्षिपति।) (ग)

साग०—सखि अपनयेमानि नलिनीपत्राणि मृणालवलयानि च। अलमेतैः। किमित्यकारण आत्मानमायासयसि। ननु भणामि। (घ)

---

(क) सहि मा लज्ज। ईदिसस्स कण्णारअणस्स अवस्सं एव्व ईदिसे वरे अहिलासेण होदव्वम्। तहवि जहा ण कोवि अवरो एदं वुत्तन्तं जाणिस्सदि तह करेमि। एदाए उण मेधाविणीए सारिआए एत्थ काअणेण होदव्वम्। कदा वि एसा इमस्स आलावस्स गहिदक्खरा भविअ कस्स वि पुरओ मन्तइस्सदि। (ख) ता किं दाणिं एत्थ करइस्सम्। अदोवि अहिअदरं मे संतावो वड्ढदि। (ग) सहि समस्सस समस्सस। जाव इमाओ दिग्घिआओ णलिणीवत्ताइं मुणालिआओ अ गिण्हिअ लहुं आअच्छामि। (घ) सहि अवणेहि इमाइं णलिणीवत्ताइं मुणालवलआइं अ। अलं एदेहिं। कीस अआरणे अत्ताणं आआसेसि। णं भणामि।

---

प्रत्ययः। 'इदंकिमोरीश्की' इत्यनेनेशादेशः। प्रशस्ता मेधास्त्यस्या इति मेधाविनी। 'धीर्धारणावती मेधा' इत्यमरः। अत्र एतद्रहस्यप्रकाशने। अस्यास्त्वत्कृतस्य आलापस्य भाषणस्य गृहीतान्यक्षराणि। न त्वर्थः। यया। दीर्घिकाया वाप्याः। मृणाली बिसं एव मृणालिका। स्वार्थे कन् ततः टाप्। यद्यपि मृणालशब्दो बहुशो मृणालमिति नपुंसके उपलभ्यते तथापि क्वचित् स्त्रियामपि प्रयुज्यते। लघु शीघ्रम्। मृणालवलयानि-क्वचित् मृणालकानि इति पाठः। मृणालिकानीति पाठे 'क्वचित्स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते' इति न्यायेन समाधेयम्। तव श्रम आयासमात्रफलः स्यादिति

---

१ संतापं. २ (परिक्रम्य तथा कृत्वा नलिनीपत्रैरास्तरणं रचयित्वा सागरिकाया हृदये तानि दत्त्वा) समस्ससदु समस्ससदु पिअसही. ३ कण्णआ. ४ ता ण...स्सदि। किं पुण एदाए मे०. सा० सङ्किदव्वं, किंदु एसा मे० सा० णी साङ्किदव्वा. ५ नास्त्येतत्पुस्तकान्तरे. ६ सहि सावसेसं संदावो बाहदि। (इति मूर्च्छां नाटयति). ७ बाधेदि. ८ (तानि क्षिपन्ती।) ता सहि अ० मे णलि० मुणालिआओ (मृणालिकाः) अ। एदेहिं अआ० अत्ताणअं सहि किं आआसेसि। अण्णं भ०.

दुर्लभजनानुरागो लज्जा गुर्वी परवश आत्मा ।
प्रियसखि विषमं प्रेम मरणं शरणं न वरमेकम् ॥ १ ॥ (क)
( इति मूर्च्छति । )

सुसं०—( सकरुणम् । ) सखि सागरिके समाश्वसिहि समाश्वसिहि।(ख)
( नेपथ्ये । )

कण्ठे कृत्तावशेषं कनकमयमधः शृङ्खलादाम कर्ष-
न्क्रान्त्वा द्वाराणि हेलाचलचरणरणत्किंकिणीचक्रवालः ।
दत्तात्तङ्कोऽङ्गनानामनुसृतसरणिः संभ्रमादश्वपालैः
प्रभ्रष्टोऽयं प्लवङ्गः प्रविशति नृपतेर्मन्दिरं मन्दुरायाः ॥ २ ॥

अपि च ।

नष्टं वर्षवरैर्मनुष्यगणनाभावादपास्य त्रपा-
मन्तः कञ्चुकिकञ्चुकस्य विशति त्रासादयं वामनः ।

---

(क) दुल्लहजणाणुराओ लज्जा गुरुई परव्वसो अप्पा ।
पिअसहि विसमं प्पेमं मरणं सरणं ण वरमेक्कम् ॥
(ख) सहि साअरिए समस्सस समस्सस ।

---

यदुक्तं तदेव विशदयति—दुर्लभ इति । दुःखेन लभ्यत इति दुर्लभः दुष्प्रापः । दुर्लभश्चासौ जनश्च तस्मिन् अनुरागः । अतः ईदृशैरुपायैर्मम तापापनोदनमशक्यमिति भावः । एवं चेत्तमुपगम्य किमित्यात्मनः प्रेम नाविष्क्रियते इत्यत्राह—लज्जा गुर्वीति । तथापि लेखप्रेषणादिना तत्प्राप्त्युपायः कर्तव्य इति चेन्नेत्याह । यतः परस्य वासवदत्तायाः इत्यर्थः वशः परवशः आत्मा शरीरम् । एवं हे प्रियसखि ममैतत्प्रेमानुरागः विषमं विपरीतम् । अतः एकं केवलं मरणं वरं शरणमाश्रयः न किमिति शेषः । यद्वा नवरमित्येकं पदम् । नास्ति वरं यस्मात्तन्नवरं मरणमेकं शरणं रक्षितृ । नञर्थेन नशब्देन समासः । नान्यदित्यर्थः ॥ १ ॥ कण्ठ इति । मन्दुराया अश्वशालायाः प्रभ्रष्टः निर्गतः । अश्वपालैः संभ्रमात्त्वरया अनुसृता अनुगता सरणिः मार्गः यस्य सः अनुसृतसरणिः । अयं प्लवंगः वानरः कण्ठे स्थितं कृत्तस्य शेषमवशिष्टं कनकस्य विकारः कनकमयं सुवर्णघटितं कनकप्रचुरं वा शृङ्खलाया दाम अधः कर्षन् । हेलया लीलया चलाः चञ्चला ये चरणाः तेषु रणत् शब्दायमानं किंकिणीनां क्षुद्रघण्टिकानां चक्रवालं मण्डलं यस्य तथाभूतः । द्वाराणि क्रान्त्वा अतिक्रम्य अङ्गनानां स्त्रीणां दत्तः आतङ्कः भयं येन तथाविधः सन् नृपतेः मन्दिरं भवनं प्रविशति । स्वभावोक्तिरलंकारः । स्रग्धरा छन्दः ॥ २ ॥ नष्टमिति । वर्षवरैः षण्ढैः । मनुष्यगणनाभावात् मनुष्येषु गणना अन्तर्भावः तस्याभावो विरहः । पुंस्त्वस्त्रीत्वाभावादित्यर्थः । तस्मात् त्रपां लज्जामपास्य नष्टं विद्रुतम् । अयं पुरोवर्ती वामनः खर्वः त्रासाद् वानरभयात्

---

१ भूमौ पतति. २ नेपथ्ये कलकलः. ३ कृत्वा०. ४ लीला. ५ ०वालम्. ६ तङ्का०ङ्कृ०. ७ पुनस्तत्रैव. ८ धरैः. ९ दकृत्वा.

पर्यन्ताश्रयिभिर्निजस्य सदृशं नाम्नः किरातैः कृतं
कुब्जा नीचतयैव यान्ति शनकैरात्मेक्षणाशङ्किनः ॥ ३ ॥

सुसं०—(आकर्ण्याग्रतोऽवलोक्य ससंभ्रममुत्थाय सागरिकां हस्ते गृहीत्वा।) सखि उत्तिष्ठोत्तिष्ठ। एष खलु दुष्टवानर इत एवागच्छति। तदलक्षितं तमालविटपान्धकारे प्रविश्यैनमतिवाहयावः। (तथा कृत्वा उभे सभयं पश्यन्त्यौ स्थिते[2]।) (क)

साग०—सुसंगते कथं त्वया चित्रफलक उज्झितः। कदापि कोऽपि तं प्रेक्षते। (ख)

सुसं०—अयि सुस्थिते किमद्यापि चित्रफलकेन करिष्यसि। एष खलु दधिभक्तलम्पटो सारिकापञ्जरमुद्घाट्यापक्रान्तो दुष्टवानरः। मेधाविन्यप्युड्डीनैषा गच्छति। तदेहि। लघ्वनुसरावः। अस्यालापस्य गृहीताक्षरा कस्यापि पुरतो मन्त्रयिष्यते। (ग)

(क) सहि उट्ठेहि उट्ठेहि। एसो खु दुट्ठवाणरो इदो ज्जेव आअच्छदि। ता[3] अलक्खिदं तमालविडवान्धआरे[4] पविसिअ इमं अदिवाहेम। (ख) सुसंगदे कहं तुए चित्तफलहओ उज्झिदो। कदावि कोपि तं पेक्खदि। (ग) अइ सुत्थिदे किं अज्ज वि चित्तफलएण[5] करिस्ससि। एसो क्खु दधिभत्तलम्पडो सारिआपञ्जरं उग्घाडिअ अवक्कन्दो दुट्ठवाणरो। मेहाविणी[6] वि उड्डीणा एसा गच्छदि। ता एहि। लहुं अणुसरम्ह[7]। इमस्स आलावस्स गहिदक्खरा कस्स वि पुरदो मन्तइस्सदि।

कञ्चुकिनः कञ्चुकस्य चोलकस्य अन्तः विशति। किरातैः किरं पर्यन्तभूमिमतन्ति गच्छन्तीति किराताः म्लेच्छभेदाः राजसेवायां वर्तमानास्तैः। पर्यन्तं प्रान्तभूमिं भयादाश्रयन्त इति तैः पर्यन्ताश्रयिभिः। निजस्य नाम्नः सदृशं कृतं चेष्टितम्। कुब्जा आत्मनः। कर्मणि षष्ठी। ईक्षणं वानरेणेति शेषः तत् शङ्कन्ते इति तथोक्ताः नीचतया अनुच्चतया एव यान्ति। अत्रापि स्वभावोक्तिः। उभयोः श्लोकयोर्भयानको रसः। शार्दूलविक्रीडितं वृत्तम् ॥ ३ ॥ तमालानां विटपाः शाखास्तेषामन्धकारः तस्मिन्। सुस्थिते इति। सुष्ठु स्थिता शोभनं स्थितमस्या इति वा सुस्थिता तत्संबोधनम्। सति त्वराकारणे किं निश्चिन्ता तिष्ठसीति भावः। तदेव व्यनक्ति किमित्यादिना। दध्ना भक्तः ओदनः दधिभक्तः। अन्नेन व्यञ्जनमिति समासः। तस्य लम्पटः लुब्धः। उड्डीना उत्प्लुता। उत्पूर्वात् 'डीङ् विहायसा गतौ' इत्यस्मात्

१ ०ण्यावलोक्य च ०मं समुत्थाय. २ तिष्ठतः; परिक्रम्योभे...एकान्ते पर्यवस्थिते. ३ साग०—किं दाणिं करेम्ह। सुसं०—एहि इमस्सिं तमा०. ४ कदलीविडवन्तरे. ५ सहि किं, कहिं सो...। मा कदावि...पेक्खिस्सदि. ६ ०एणं ०फलहं गेण्हिअ। एसो क्खु...लम्पडदाए; एताए सारिआए, एसो क्खु तहिं उवगदो सारि०; एसा क्खु मेहा० उड्डीणा अण्णदो ग०. ७ ०रम्ह। (इति निष्क्रान्ते).

साग०—सखि एवं कुर्वः । ( इति परिक्रामतः । ) ( क )

( नेपथ्ये । )

ही ही भोः आश्चर्यमाश्चर्यम् । ( ख )

साग०—( विलोक्य सभयम् । ) सुसंगते ज्ञायते पुनरपि स दुष्ट-वानर आगच्छतीति । ( ग )

सुसं०—( विदूषकं दृष्ट्वा विहस्य । ) अयि कातरे मा बिभीहि । भर्तुः पार्श्ववर्ती आर्यवसन्तकः खल्वेषः । ( घ )

साग०—( सस्पृहमवलोक्य । ) सखि सुसंगते दर्शनीयः खल्वयं जनः । ( ङ )

सुसंगता—अयि सुस्थिते किमनेन दृष्टेन । दूरे भवति खलु सारिका । तदेहि । अनुसरावः । ( च )

( उभे निष्क्रान्ते । )

( ततः प्रविशति प्रहृष्टो विदूषकः । )

विदूषकः—ही ही भोः आश्चर्यमाश्चर्यम् । साधु रे श्रीखण्ड-दास धार्मिक साधु । येन दत्तमात्रेणैव तेन दोहदेनेदृशी नवमालिका संवृत्ता येन निरन्तरोद्भिन्नकुसुमगुच्छशोभितविटपा उपहसन्तीव लक्ष्यते देवीपरिगृहीतां माधवीलताम् । तद्यावद्गत्वा प्रियवयस्यं वर्धयिष्यामि ।

---

( क ) सहि एव्वं करेम्ह । ( ख ) ही ही भो अच्चरिअं अच्चरिअम् । (ग) सुसंगदे जाणिअदि पुणो वि सो दुट्ठवाणरो आअच्छदित्ति । ( घ ) अइ काअरे मा भेहि । भत्तुणो पासवत्ती अज्जवसन्तओ क्खु एसो । ( ङ ) सहि सुसंगदे दंसणीओ क्खु अअं जणो । ( च ) अइ सुत्थिदे किं इमिणा दिट्ठेण । दूरे भोदि क्खु सारिआ । ता एहि । अणुसरम्ह ।

---

क्तप्रत्ययः । ओदितत्वान्निष्ठानत्वम् । ही ही इति विदूषकस्य हर्षसूचको निपातः । 'ही ही वैदूषकः' इत्युक्तत्वात् । दत्तमेव दत्तमात्रं तेन । मयूरव्यंसकादित्वात्समासः । निरन्तरेति । निर्गतमन्तरं यस्मिन्कर्मणि तद्यथा तथा उद्भिन्ना ये कुसुमगुच्छाः तैः शोभिताः विटपाः शाखाः यस्याः सा । वर्धयिष्यामि दिष्ट्यावृद्धिं करिष्यामि ।

---

१ निष्क्रान्ते. २ दृष्ट्वा सबहुमानम्. ३ अवलोकयति. सुसं०—सहि किं एदिणा. ४ पटाक्षेपेण प्र०. ५ णं सुणीअदि. ६ अदिकादरे मा भाआहि मा भाआहि । भट्टिणो पस्सपरिवट्टि अज्ज० एसो आअच्छदि; ण भेहि...परिवत्ती क्खु एसो अज्ज०; अस्मात्परं–( ततः प्रविशति वसन्तकः–विदूषकः ) वस०, विदू०—अच्चरिअं 1 साहु रे सिरिखण्डदास धम्मिअ साहू. ७ दूरेण भोदि, दूरीभूदा.

( परिक्रम्यावलोक्य च । ) एष खलु प्रियवयस्यस्तस्य दोहदस्य लब्धप्रत्ययतया परोक्षामपि तां नवमालिकां प्रत्यक्षामिव कुसुमितां प्रेक्षमाणः हर्षोत्फुल्ललोचन इत एवागच्छति । तद्यावदेनमुपसर्पामि । ( क )

( ततः प्रविशति यथानिर्दिष्टो राजा । )

राजा—( सहर्षम् । )

उद्दामोत्कलिकां विपाण्डुररुचं प्रारब्धजृम्भां क्षणा-
दायासं श्वसनोद्गमैरविरतैरातन्वतीमात्मनः ।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन्कोपविपाटलद्युति मुखं देव्याः करिष्याम्यहम् ॥ ४ ॥

तद्वृत्तान्तमुपलब्धुं गतो वसन्तकोऽद्यापि नायाति ।

---

( क ) ही ही भो अच्चरिअं अच्चरिअम् । साहु रे सिरिखण्डदास धम्मिअ साहु । जेण दिण्णमेत्तेण ज्जेव्व तेण दोहएण ईदिसी णोमालिआ संवुत्ता जेण निरन्तरुब्भिण्णकुसुमगुच्छसोभिअविडवा उवहसन्ती विअ लक्खिअदि देवीपरिग्गहिदं माधवीलदं । ता जाव गदुअ पिअवअस्सं वड्ढावइस्सम् । एसो क्खु पिअवअस्सो तस्सं दोहदस्स लद्धपच्चअदाए परोक्खंवि तं णोमालिअं पच्चक्खं विअ कुसुमिदं पेक्खन्तो हरिसुप्फुल्ललोअणो इदो ज्जेव आअच्छदि । ता जाव णं उवसप्पामि ।

---

लब्धः प्रत्ययो विश्वासः । जातानुभवादित्यर्थः । यस्य तस्य भावस्तत्ता तया लब्धप्रत्ययतया । कुसुमितां कुसुमानि संजातानि यस्यास्तां तथोक्ताम् । ‘ तदस्य संजातं तारकादिभ्य इतच् ’ इति इतच्प्रत्ययः । हर्षेण उत्फुल्ले विकसिते लोचने यस्य सः । उद्दामेत्यादि । अद्य इमां हृदयसंनिहितां उद्यानलतां मदेन सहिता समदना तां समदनामन्यां नारीमिव पश्यन् अहं ध्रुवं देव्या वासवदत्ताया मुखं कोपेन विपाटला विशेषेण श्वेतरक्ता द्युतिर्यस्य तत्कोपविपाटलद्युति करिष्यामि । उभयोः साम्यमाह— क्षणाद् दोहददानक्षणे नायकावलोकनक्षणे च इत्यर्थः । उद्दामोत्कलिकां उद्दामा अतिप्रभूता इत्यर्थः । उद्गताः कलिका यस्याः तादृशीम् । पक्षे उद्दामा अत्युत्कटा उत्कलिका उत्कण्ठा यस्यास्तथाविधाम् । विपाण्डुररुचं विशेषेण पाण्डुरा शुभ्रा विपाण्डुरा । सर्वत्र पुष्पोद्गमात् । पक्षे विमनस्कतया । रुक् कान्तिर्यस्याः तां तथोक्ताम् । तथा च प्रारब्धा जृम्भा कलिकाविकासः जृम्भणं च यया तादृशीम् । पुनश्च अविरतैः संततैः श्वसनानां वातानां पक्षे निःश्वासानां उद्गमैः आविर्भावैः आत्मनः आयासं खेदमातन्वतीम् । श्लेषालंकार उपमा च । शार्दूलविक्रीडितं वृत्तम् ॥ ४ ॥ यदुक्तमचिन्त्यो ही-

---

१ ग्याग्रतो दृष्ट्वा. २ ०शति राजा. ३ जृम्भेक्षणात्. ४ तस्याः. ५ नास्त्येतद्वाक्यं क्वचित्. ६ ०दास णाम. ७ सा णोमा० लदा. ८ ०मच्छदा ढअं बिब्बादो उव०...तं देवीए परि०; गुच्छाच्छादिअवि०. ९ णिवेदेमि. १० तस्स ज्जेव. ११ पेक्खिअ दोहलदोहद ) रसोप्फुल्ल०. १२ अत्मातपरं—इति राजानं प्रति गतः । इत्य०.

विदूषकः—( सहसोपसृत्य । ) जयतु जयतु प्रियवयस्यः । भो वयस्य दिष्ट्या वर्धसे । ( जेण दिण्णमेत्तेण ज्जेव्व तेण दोहएण ईदिसी णोमालिआ संवुत्तेत्यादि पठति । ) ( क )

राजा—वयस्य कः संदेहः । अचिन्त्यो हि मणिमन्त्रौषधीनां प्रभावः । पश्य ।

कण्ठे श्रीपुरुषोत्तमस्य समरे दृष्ट्वा मणिं शत्रुभि—
नंष्टं मन्त्रबलाद्वसन्ति वसुधामूले भुजङ्गा हताः ।
पूर्वं लक्ष्मणवीरवानरभटा ये मेघनादाहताः
पीत्वा तेऽपि महौषधेर्गुणनिधेर्गन्धं पुनर्जीविताः ॥ ५ ॥

तदादेशय मार्गं येन वयमपि तदवलोकनेन चक्षुषः फलमनुभवामः ।

विदूषकः—( साटोपम् । ) एत्वेतु भवान् । ( ख )

राजा—गच्छाग्रतः ।

( उभौ सगर्वं परिक्रामतः । )

विदूषकः—( आकर्ण्य सभयं परावृत्य राजानं गृहीत्वा ससंभ्रमम् । ) भो वयस्य एहि पलायावहे । ( ग )

राजा—किमर्थम् ।

---

( क ) जअदु जअदु पिअवअस्सो । भो वअस्स दिट्ठिआ वड्ढसि । ( ख ) एदु एदु भवं । ( ग ) भो वअस्स एहि पलाअम्ह ।

---

त्यादि तदेवोदाहरणेन समर्थयति—कण्ठ इत्यादिना । पुरुषेषु उत्तमः पुरुषोत्तमः विष्णुः । सुप्सुपेति समासः । तस्य कण्ठे मणिं कौस्तुभाख्यं दृष्ट्वा शत्रुभिः नष्टं विद्रुतम् । मन्त्रबलात् हता हतवीर्या इत्यर्थः । भुजैः भोगैः गच्छन्तीति भुजङ्गाः । खचो डित्वाट्टिलोपः । वसुधामूले पाताले वसन्ति । पूर्वं रामरावणयुद्धे ये लक्ष्मणश्च वीराश्च ते वानरभटाश्च लक्ष्मणवीरवानरभटाः मेघनादेन इन्द्रजिता आहताः तेऽपि गुणानां विशल्यकरणादीनां निधिः गुणनिधिस्तस्याः महती चासौ ओषधिश्च तस्याः गन्धं पीत्वा आघ्राय पुनः जीविताः । तदुक्तं रामायणे युद्धकाण्डे चतुःसप्ततितमे सर्गे—'तावप्युभौ मानुषराजपुत्रौ तं गन्धमाघ्राय महौषधीनाम् । बभूवतुस्तत्र तदा विशल्यावुत्तस्थुरन्ये च हरिप्रवीराः ॥ सर्वे विशल्या विरुजः क्षणेन हरिप्रवीराश्च हताश्च ये स्युः । गन्धेन तासां प्रवरौषधीनां सुप्ता निशान्तेष्विव संप्रबुद्धाः ॥' इति । शार्दूलविक्रीडितं छन्दः ॥ ५ ॥ आटोपेन गर्वेण सहितं यथा तथा साटोपम् ।

---

१ उपसृत्य. २ सा णोमा०. ३ नितरां. ४ ०चरैः, ०बलैः. ५ अद्य. ६ किमिति. ७ एतन्नास्ति क्वचित्.

विदूषकः—एतस्मिन्बकुलपादपे कोऽपि भूतः प्रतिवसति । (क)

राजा—धिङ् मूर्ख विश्रब्धं गम्यताम् । कुत ईदृग्विधानामत्र संभवः।

विदूषकः—भोः एष खलु स्फुटाक्षरमेव मन्त्रयते । तद्यदि मम वचनं न प्रत्येषि तदग्रतो भूत्वा स्वयमेव तावदाकर्णय । (ख)

राजा—(तथा कृत्वा श्रुत्वा च ।)

स्पष्टाक्षरमिदं यस्मान्मधुरं स्त्रीस्वभावतः ।
अल्पाङ्गत्वादनिर्ह्रादि मन्ये वदति सारिका ॥ ६ ॥

(ऊर्ध्वं निरूप्य ।) कथं सारिकैवेयम् ।

विदूषकः—(ऊर्ध्वमवलोक्य ।) आः कथं सत्यमेव सारिका ।(सरोषं दण्डकाष्ठमुद्यम्य ।) आः दास्याःपुत्रि किं त्वया ज्ञातं सत्यमेव वसन्तको बिभेतीति । तत्तिष्ठ मुहूर्तम् । यावदनेन पिशुनजनहृदयकुटिलेन दण्डकाष्ठेन परिपक्वमिव कपित्थफलमस्माद्बकुलपादपादाहत्य भूमौ त्वां पातयिष्यामि । (इति हन्तुमुद्यतः ।) (ग)

राजा—(निवारयन् ।) मूर्ख किमप्येषा रमणीयं व्याहरति । तत्किमेनां त्रासयसि । शृणुवस्तावत् ।

---

(क) एअस्सिं वउलपाअवे कोवि भूदो पडिवसदि । (ख) भो एसो क्खु फुडक्खरं एव्वं मन्तेदि । ता जइ मम वअणं न पत्तिआअसि ता अग्गदो भविअ सअं एव्व दाव आअण्णेहि । (ग) आः कथं सच्चं एव्व सारिआ । आः दासीएधीए किं तुए जाणिदं सच्चं जेव्व वसन्तओ भाअदित्ति । ता चिट्ठ मुहुत्तअम् । जाव इमिणा पिसुणजणहिअअकुडिलेण दण्डकट्ठेण परिपक्कं विअ कइत्थफलं इमादो वउलपाअवादो आहाणिअ भूमीए तुमं पाडइस्सम् ।

---

स्पष्टाक्षरमिति । इदं स्पष्टानि अक्षराणि यस्य तत्स्पष्टाक्षरं मन्त्रणं यस्मात्स्त्रीस्वभावतः मधुरम् । अल्पाङ्गत्वात् अल्पं लघु अङ्गं यस्याः सा अल्पाङ्गा तस्या भावः अल्पाङ्गत्वं तस्मात् अनिर्ह्रादि अनुच्चैः श्रूयमाणं तस्मात्सारिका वदति इति मन्ये॥६॥ अधिकपाठे—भयालुकः भयशीलः । अत्र आलुच् चिन्त्यः । भीलुक इति साधीयः । दास्याःपुत्रीति 'षष्ठ्या आक्रोशे' इति अलुग्वा । पिशुनः दुर्जनस्तस्य हृदयमिव कुटिलेन

---

१ ईदृशानामत्र प्रभावः. २ आकर्ण्य. ३ तावत्. ४ उपसृत्योर्ध्वमवलोक्य, निरूप्य–निपुणमवलोक्य–स्मितं कृत्वा. ५ विचार्य, ऊर्ध्वं निरूप्य. ६ मन्त्रयते. ७ अस्सिं क्खु लकुच०. ८ भो एसो क्खु इति नास्ति पुस्तकान्तरे. ९ अस्मात्परं–राजा–(विहस्य) एवम् । विदू०—भो वअस्स तुमं भआलुओ जेण सारिअं भूदेत्ति मन्तेसि । राजा—धिङ् मूर्ख यदात्मना कृतं तन्मयि संभावयसि । विदू०—भो जइ एव्वं मा क्खु मं णिवारेसि । इत्यधिको ग्रन्थः केषुचित्पुस्तकेषु. १० दासीए मे...मम वस०. ११ सुपरि० विअ फलं...लकुचपा० भूमीए सीसं (शीर्षं).

( उभावाकर्णयतः । )

विदूषकः—( आकर्ण्य । ) भो वयस्य श्रुतं त्वया यदेतया मन्त्रितम् । एषा भणति सखि क एष त्वयात्रालिखितः । सखि प्रवृत्तमदनमहोत्सवे भगवाननङ्ग इति । पुनरप्येषा भणति सखि कस्मात्त्वयाहमत्रालिखिता । सखि किमकारणं कुप्यसि । यादृशस्त्वया कामदेव आलिखितस्तादृशी मया रतिरालिखितेति । तदन्यथासंभाविनि किं तवैतेनालपितेन । कथय सर्वं वृत्तान्तम् । भो वयस्य किं न्विदम् । ( क )

राजा—वयस्यैवं तर्कयामि । कयापि हृदयवल्लभोऽनुरागादालिख्य कामदेवव्यपदेशेन सखीपुरतोऽपह्नुतः । तत्सख्याऽपि प्रत्यभिज्ञाय वैदग्ध्यादसावपि तत्रैव रतिव्यपदेशेनालिखितेति ।

विदू०—( छोटिकां दत्त्वा । ) भो वयस्य युज्यतएवं खल्वेतत् । ( ख )

राजा—वयस्य तूष्णीं भव । पुनरप्येषा व्याहरति ।

विदू०—भो एषा भणति सखि मा लज्जस्व । ईदृशस्य कन्यारत्नस्यावश्यमेवेदृशे वरेऽभिलषेण भवितव्यम् । भो वयस्य यैषाऽऽलिखिता सा खलु कन्या दर्शनीया । ( ग )

---

( क ) भो वअस्सं सुदं तुए जं एदाए मन्तिदं । एसा भणादि सहि को एसो तुए एत्थ आलिहिदो । सहि पउत्तमअणमहूस्सवे भअवं अणङ्गोत्ति । पुणोवि एसा भणादि सहि कीस तुए अहं एत्थ आलिहिदा । सहि किं अआरणं कुप्पसि । जादिसो तुए कामदेओ आलिहिदो तादिसी मए रइ आलिहिदेत्ति । ता अण्णधासम्भाविणि किं तुए एदिणा आलविदेण । कहेहि सव्वं वुत्तन्तम् । भो वअस्स किं ण्णेदम् । ( ख ) भो वअस्स जुज्जदि । एव्वं क्खु एदं । ( ग ) भो एसा भणादि सहि मा लज्ज । ईदिसस्स कण्णारअणस्स अवस्सं एव्व ईदिसे वरे अहिलासेण होदव्वम् । भो वअस्स जा एसा आलिहिदा सा क्खु कण्णा दंसणीआ ।

---

वक्रेण । अधिकपाठे–उदरे प्रसितः औदरिक उदरपूरणपरः । तस्य अभ्यवहारे अन्ने । हृदयस्य वल्लभः हृदयवल्लभः । कामदेवो मदनः तस्य व्यपदेशेन व्याजेन । मदनत्वेन प्रतिपाद्येत्यर्थः । अपह्नुतः अपलपितः । वैदग्ध्यान्नैपुण्यात्तद् अपह्नवकरणं प्रत्यभिज्ञाय ज्ञात्वा । छोटिकामिति अङ्गुष्ठस्य मध्यमामाघट्य झटित्यपनयनाज्जायमानः शब्दः छोटिकासंज्ञः ।

---

१ विदू०—एवं भणादि । इमस्स बम्हणस्स भोजणं दिज्जेति । राजा—सर्वमप्यौदरिकस्याभ्यवहार एव पर्यवस्यति तन्सत्यं वद किमालपति सारिका । इत्य०. २ श्रुत्वा. ३ कयाचिद्धृतवल्लभानु०. ४ अभिलि०. ५ शेन निह्नुतः. ६ ०दप्रातिभि–च–न्दान–नया. ७ तत्रालिख्य रतिव्य० दर्शितेति. ८ ददाति. ९ आस्स्व. १० भो वअस्स...अणङ्गोत्ति । पुणोवि एसा भणादि–इत्यस्य स्थाने किं भणादि इत्येष पठ्यते कैश्चित्. ११ सहि मा कुप्प मा कुप्प । जादि० अअं काम०...रइ त्ति. १२ किं किम्. १३ एतन्नास्ति पुस्त०.

राजा—यद्येवमवहितौ[1] शृणुवस्तावत्। अस्त्यत्रावकाशो नः कुतूहलस्य। (इत्युभावाकर्णयतः।)

विदूषकः—भो वयस्य श्रुतं त्वया यदेतया मन्त्रितम्। सखि अपनयेमानि नलिनीपत्त्राणि मृणालवलयानि च। अलमेतेन। कथमकारण आत्मानमायासयासि। (क)

राजा—वयस्य न केवल श्रुतमभिप्रायोऽपि लक्षितः[2]।

विदूषकः—भो मा त्वं पाण्डित्यगर्वमुद्वह। अहं त एतस्या मुखाच्छ्रुत्वा सर्वं व्याख्यास्यामि। तच्छृणुवः। अद्यापि कुरकुरायत एव एषा सारिका दास्याःपुत्री। (ख)

राजा—युक्तमभिहितम्। (पुनराकर्णयतः।)

विदूषकः—भो वयस्य एषा खलु सारिका दास्यादुहिता चतुर्वेदी ब्राह्मण इव ऋचः पठितुं प्रवृत्ता। (ग)

राजा—वयस्य कथय किमप्यन्यचेतसा मया नावधारितं किमनयोक्तमिति[3]।

विदूषकः—भो एतदेतया पठितम्।

दुर्लभजनानुरागो लज्जा गुर्वी परवश आत्मा।
प्रियसखि विषमं प्रेम मरणं शरणं न वरमेकम्॥ ७॥ (घ)

---

(क) भो वअस्स सुदं तुए जं एदाए मन्तिदम्। सहि अवणेहि इमाइं[4] णलिणीवत्ताइं मुणालवलआइं[5] अ। अलं एदिणा। कीस अआरणे अत्ताणं आआसेसि।
(ख) भो मा तुमं पण्डिअत्तगव्वं[6] उव्वह। अहं दे एदाए मुहादो सुणिअ सव्वं वाक्खाणइस्सम्। ता सुणम्ह। अज्ज वि[7] कुरकुराअदि एव्व एसा सारिआ दासीएधीआ। (ग) भो वअस्स एसा क्खु सारिका दासीएदुहिदा चतुव्वेदी[8] बम्हणो विअ रिचाइं पढिदुं पवुत्ता। (घ) भो एदं[9] एदाए पढिदम्।

दुल्लहजणाणुराओ लज्जा गुरुई परव्वसो अप्पा।
पिअसहि विसमं पेम्मं मरणं सरणं ण वरमेक्कम्॥

---

कुरकुरायते—कुरकुरेति ध्वनेरनुकरणवाचि पदम्। ततः 'अव्यक्तानुकरणाद्यजवरार्धात्-' इति डाचि 'लोहितादिडाज्भ्यः क्यष्' इति क्यष्। महाब्राह्मणेत्यत्र कुत्सायां महच्छब्दः।

---

१ तदवहितैः श्रोतव्यम्. २ ज्ञात एव. ३ तन्किम…क्तम्. ४ मे. ५ मुणालिआओ अ। एदाई अआरणे अत्ताणअं सहि किं आआ०. ६ पण्डिअग०. ७ कं वि कुर०. ८ चतुव्वेदो विअ ब०. ९ एदं भणादि.

राजा—( संस्मितम् । ) साधु[2] भवन्तं महाब्राह्मणं मुक्त्वा कोऽन्य ए[3]वमृचामभिज्ञः ।

विदूषकः—ततः किं नु खल्विदम् । ( क )

राजा—ननु गाथेयम् ।

विदूषकः—किं गाथा । ( ख )

राजा—कयापि श्लाघ्ययौवनया प्रियतममनासादयन्त्या जीवित-निरपेक्षयोक्तम् ।

विदूषकः—( उच्चैर्विहस्य । ) भोः किमेतैर्वक्रभणितैः । ऋज्वेव किं न भणसि यथा मामनासादयन्त्येति । अन्यथा कोऽन्यः कुसुमचाप-व्यपदेशेनैवं निह्नूयते । ( हस्ततालं दत्त्वोच्चैर्विहसति । ) ( ग )

राजा—( ऊर्ध्वमवलोक्य । ) धिङ् मूर्ख किमुच्चैर्हसता त्वयेयमुत्रा-सिता येनोड्डीयान्यत्र क्वापि गता ।

( उभौ निरूपयतः । )

विदूषकः—( विलोक्य । ) भो एषा खलु कदलीगृहमेव गता । तदेहि । लघ्वनुसरावः । ( घ )

राजा—

दुर्वारां कुसुमशरव्यथां वहन्त्या
कामिन्या यदभिहितं पुरः सखीनाम् ।

---

(क) तदो किं णु क्खु एदं । (ख) किं गाथा । (ग) भो किं एदेहिं वक्कभणि-देहिं । उज्जु एव्व किं ण भणासि जहा मं अणासादअन्तीएत्ति । अण्णहा को अण्णो कुसुमचावववदेसेण एवं णिण्हवीअदि । (घ) भो ऍसा वखु कअलीघरं एव्व गदा । ता एहि । लहुं अणुसरम्ह ।

---

तदुक्तम्—' शङ्खे तैले तथा मांसे वैद्ये ज्यौतिषिके द्विजे । यात्रायां पथि निद्रायां महच्छब्दो न दीयते॥' इति। गाथा प्राकृतभाषापद्यम् । अत्रार्या । 'गाथा श्लोके संस्कृ-तान्यभाषायां गेयवृत्तयोः ' इति मेदिनी । श्लाघ्यं लोभनीयमित्यर्थः । अर्हार्थे ण्यत् । यौवनं यस्यास्तया । प्रियतममभिमतवल्लभम् । वक्रभणितैः कुटिलभाषणैः । ऋजु सरलं स्पष्टमित्यर्थः । अन्यथा एवं न चेत् । दुर्वारामिति । दुःखेन वार्यते इति दुर्वारा तां

---

१ विहस्य. २ साधु महाब्राह्मण साधु । कोऽन्यः; एवंविधं भवन्तं ब्राह्मणं; अहो महाब्राह्मणं वसन्तकं त्यक्त्वा, अहो महाब्राह्मणः खल्वसि; राजा—साकूतं शृणोति । ३ एवंविधानां. ४ मूर्ख. ५ वयस्य कया. ६ ०वनफल-रमण-मनासादयन्त्या; प्रियजन-मासादयितुमपारयन्त्या. ७ ( उच्चैर्विहस्य । ) अहह. ८ विह० ९ त्वया तपस्विनी त्रासितेयं. १० इति. ११ मदनकृतां. १२ किं क्खु दाव तए जाणिदं. १३ उज्जुअं. १४ भो वअस्स अण्णधा मा संभावेहि । एसा.

तद्भूयः शिशुशुकसारिकाभिरुक्तं
धन्यानां श्रवणपथातिथित्वमेति ॥ ८ ॥

विदूषकः—एत्वेतु भवान्। ( परिक्रामतः। ) ( क )

विदूषकः—भोः एतत्खलु कदलीगृहम्। यावत्प्रविशावः। ( ख )

( उभौ प्रविशतः। )

विदूषकः—भोः गता दास्याःपुत्री। अत्र तावन्मन्दमरुतोद्वेल्लद्बालकदलीदलशीतले शिलातल उपविश्य मुहूर्तं विश्राम्यावः। ( ग )

राजा—यदभिरुचितं भवते।

( इत्युपविशतः। )

राजा—( निःश्वस्य। दुर्वारामित्यादि पुनः पठति। )

विदूषकः—( पार्श्वतोऽवलोक्य। ) भोः एतेन खलूद्घाटितद्वारेण तस्याः सारिकायाः पञ्जरेण भवितव्यम्। एषोऽपि स चित्रफलकः। यावदेनं गृह्णामि। ( फलकं गृहीत्वा निरूप्य च सहर्षम्। ) भो वयस्य दिष्ट्या वर्धसे। ( घ )

---

( क ) एदु एदु भवं। ( ख ) भो एदं क्खु कअलीघरअम्। जाव पविसम्ह। ( ग ) भो गदा दासीएधीआ। एत्थ दाव मन्दमारुदुव्वेल्लन्तबालकअलीदलसीदले सिलातले उपविसिअ मुहुत्तअं वीसम्ह। ( घ ) भो एदेण क्खु उग्घाडिअदुवारेण ताए सारिआए पञ्जरेण होदव्वम्। एसो वि सो चित्तफलओ। जाव णं गेण्हामि। भो वअस्स दिट्ठिआ वड्ढसि।

---

दुर्वारां दुष्परिहाराम्। 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्' इति खल्। कुसुमशरस्य कामस्य व्यथां वहन्त्या धारयन्त्या कामिन्या सुन्दर्या सखीनां पुरः यदात्मनोऽनुरागस्य व्यञ्जकमुक्तं तद् भूयः पुनः शिशवः च शुकाश्च सारिकाश्च ताभिः उक्तं धन्यानां भाग्यशालिनां श्रवणस्य पन्थाः श्रवणपथः श्रोत्रविवरं तस्य अतिथित्वं गोचरत्वमेति। धन्या एव तत् शृण्वन्तीत्यर्थः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलंकारः। अनुप्रासश्च। प्रहर्षिणी वृत्तम्। तल्लक्षणं तु—'म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्' इति ॥ ८ ॥

मन्देति। मन्देन मारुतेन वायुना उद्वेल्लन्ति कम्पमानानि यानि बालकदलीनां दलानि पत्राणि तैः शीतले। उद्घाटितद्वारेण दुष्टवानरेण इति पाठे दुष्टवानरेण उद्घाटितं द्वारं यस्य तेन इति योजनीयम्। किमेतदिति किं ते हर्षकारणं

---

१ शुकशिशु. २ पार्श्वाणि. ३ हर्षं नाटयति. ४ एदं तं... । ता पविसदु भवं. ५ भो अलं दाव ताए दासीएधीआए सारिआए अण्णेसिदेण ( अन्वेषितेन )—अण्णेसणपअत्तेण. ६ दुव्वेलिद...कदलीघरअं पविसिअ; मलअमारुदवेवमाण; सीअलिद सिला.

राजा—( सकौतुकम् । ) वयस्य किमेतत् ।

विदू०—भोः एतत्खलु तद्यन्मया भणितम् । त्वमेवात्रालिखितः । कोऽन्यः कुसुमचापव्यपदेशेन निह्नूयत इति । ( क )

राजा—( सहर्षं हस्तौ प्रसार्य । ) सखे दर्शय दर्शय ।

विदूषकः—न ते दर्शयिष्यामि । सापि कन्यकात्रैवालिखिता तिष्ठति । तत्किं पारितोषिकेण विनेदृशं कन्यारत्नं दर्श्यते । ( ख )

राजा—( कटकमर्पयन्नेव बलाद् गृहीत्वा विलोक्य सविस्मयम् । )

लीलावधूतपद्मा कथयन्ती पक्षपातमधिकं नः ।
मानसमुपैति केयं चित्रगता राजहंसीव ॥ ९ ॥

अपि च ।

विधायापूर्वपूर्णेन्दुमस्या मुखमभूद् ध्रुवम् ।
धाता निजासनाम्भोजविनिमीलनदुःस्थितः ॥ १० ॥

( क ) भो एदं क्खु तं जं मए भणिदम् । तुमं ज्जेव एत्थ आलिहिदो । को अण्णो कुसुमचाँवव्ववदेसेण गिण्हवीअदित्ति । ( ख ) णँ दे दंसइस्सम् । सा वि कण्णआ एत्थ ज्जेव आलिहिदा चिट्ठदि । ता किं पारितोसिएण विणा ईदिसं कण्णारअणं दंसीअदि ।

किमिति मां दिष्ट्या वर्धयसि इति भावः । 'विदू०—भो वयस्य दिष्ट्या वर्धसे । राजा–( सकौतुकम् । )...कोऽन्यो...व्यपदिश्यते' इत्यादिना 'तत्रावकाशो भवतः किमु स्यात् ( श्लो. १५ )' इत्यन्तेन राजविदूषकसागरिकासुसंगतानामन्योन्यवचनेनोत्तरोत्तरानुरागबीजोद्घाटनात्प्रगमनमिति प्रतिमुखसंधेरङ्गमुक्तम् । परितोषः प्रयोजनमस्य इति पारितोषिकं तेन । ठञ् । **लीलेत्यादि** । लीलया विलासेन अवधूता तिरस्कृता पद्मा लक्ष्मीः यया सा लीलावधूतपद्मा । लीलया हेलया अवधूतं भ्रमितं पद्मं कमलं यया इति केचित् । किं त्वेतदसंगतमत्रेति भाति । राजहंसीपक्षे लीलया लीलाभ्रमणेनेत्यर्थः अवधूतानि कम्पितानि पद्मानि यया सा तथोक्ता । चित्रगता चित्रं गता आलिखितेत्यर्थः । पक्षे चित्रं विविधं गतं गमनं यस्याः सा तथा । इयं का नः अस्माकं अस्मत्संबद्धमधिकं सविशेषं पक्षे पातः पक्षपातः तं पक्षपातमनुकूलतामित्यर्थः । पक्षे पक्षयोः पातः विधूननं पक्षपातस्तं कथयन्ती ख्यापयन्ती । राजहंसीव मानसं मनः पक्षे मानसाख्यं सरः । उपैति । श्लेषोपमे अलंकारौ । आर्या वृत्तम् ॥९॥ **विधायेति** । धाता ब्रह्मा अस्याः कन्यायाः मुखम् । मुखरूपमित्यर्थः ।

१ ( हस्तं प्रसारयति । ) सखे उपनय–समर्पय; ( अधोमुखः सहर्षमुत्थाय हस्तं प्रसारयति ). २ बलाद्गृहीत्वा सविस्मयं पश्यति, गृहीत्वा पश्यति; सवि० वयस्य पश्य पश्य. ३ ०चावसमाणरूवोत्ति; अण्णहा (अन्यथा) को. ४ भो ण दे, भो एदं दं०; ता परितोसेण देइस्सं. ५ कण्णआ–इत्थिआ०.

( ततः प्रविशति सागरिका सुसंगता च । )

सुसं०—सखि न समासादितावाभ्यां सारिका । तच्चित्रफलकमपि तावदस्मात्कदलीगृहाद्गृहीत्वा लघ्वागच्छावः । ( क )

साग०—सखि एवं कुर्वः । ( ख )

( उभे परिक्रामतः । )

विदूषकः—भो वयस्य कस्मात्पुनरेषाऽवनतमुख्यालिखिता । ( ग )

सुसं०—( आकर्ण्य । ) सखि यथा वसन्तको मन्त्रयते तथा तर्कयामि भर्त्राप्यत्रैव भवितव्यम् । तत्कदलीगुल्मान्तरिते भूत्वा प्रेक्षावहे तावत् ।( घ )

( उभे पश्यतः । )

राजा—वयस्य पश्य पश्य । ( विधायापूर्वपूर्णेन्दुमित्यादि पुनः पठति । )

सुसं०—सखि दिष्ट्या वर्धसे । एष ते हृदयवल्लभस्त्वामेव निर्वर्णयंस्तिष्ठति । ( ङ )

साग०—(सलज्जम् ।)कस्मात्परिहासशीलतयेमं जनं लघुं करोषि।(च)

विदू०—( राजानं चालयित्वा । ) ननु भणामि । कस्मादेषाऽवनतमुख्यालिखितेति । ( छ )

---

( क ) सहि ण समासादिदा अम्हेहिं सारिआ । ता चित्तफलअं पि दाव इमादो कदलीघरादो गेण्हिअ लहुं आगच्छम्ह । ( ख ) सहि एवं करेम्ह । ( ग ) भो वँअस्स कीस उण एसा अवणदमुही आलिहिदा । ( घ ) सहि जहा वसन्तओ मन्तेदि तहा तक्केमि भट्टिणा वि एत्थ ज्जेव्व होदव्वम् । ता कअलीगुम्मन्तरिदाओ भविअ पेक्खम्ह दाव । ( ङ ) सहि दिट्ठिआ वड्ढसि । एसो दे हिअअवल्लहो तुमं ज्जेव्व णिव्वण्णअन्तो चिट्ठदि । ( च ) कीस परिहासशीलदाए इमं जणं लहुं करेसि । ( छ ) णं भणामि । कीस एसा अवणदमुही आलिहिदेत्ति ।

---

पूर्वः पूर्वं निर्मितः न भवतीत्यपूर्वः । पूर्णश्चासौ इन्दुश्च पूर्णेन्दुः तम् । कलङ्कराहित्यात्सदैव पूर्णत्वादपूर्वत्वम् । विधाय सृष्ट्वा ध्रुवं निश्चितं निजं यदासनाम्भोजं आसनभूतं पद्मं तस्य विनिमीलनेन संकोचनेन । पूर्णेन्दोः सतताविर्भावादिति भावः । दुःस्थितः असुखमापन्नः अभूत् । दुःखितः इति पाठः साधीयान्भवेत् । उत्प्रेक्षालंकारः ॥१०॥ अवनतं नम्रं मुखं यस्याः सा । भर्त्रा वत्सराजेन । कदलीनां गुल्मः स्तम्बः तेनान्तरिते । चालयित्वा—एतदन्यत्र व्यासक्तचित्तस्य राज्ञः स्वभाषणश्रवणपरत्वापादनार्थम् ।

---

१ साग०—सहि सुसं०. २ सुसं०. ३ उपसर्पतः. ४ आकर्णयतः. ५ उद्दिश्य. ६ सहि साँअरिए ०दिदा सा. ७ वअस्स…एसा उण रुण्ण (रुदित) मुही. ८ सग्गु०. ९ सुणम्ह. १० णिवण्ण. ११ किं एव्वं परिहासलीलाणं. १२ भो अण्णं भ० कीस उण एसा रुण्णमुही.

राजा—ननु[1] सारिकयैव सकलमावेदितम् ।

सुसं०—सखि दर्शितं खलु मेधाविन्याऽऽत्मनो मेधावित्वम् । (क)

विदू०—भो वयस्य अपि सुखयति ते लोचनम् । ( ख )

साग०—( ससाध्वसमात्मगतम् । ) किमेष भणिष्यतीति यत्सत्यं जीवितमरणयोरन्तरे वर्ते । ( ग )

राजा—सुखयतीति किमुच्यते । पश्य[5] ।

कृच्छ्रा[3]दूरुयुगं व्यतीत्य सुचिरं भ्रान्त्वा नितम्बस्थले
मध्येऽस्यास्त्रिवलीतरङ्गविषमे निस्पन्दतामागता ।
मद्दृष्टि[4]स्तृषितेव संप्रति शनैरारुह्य तुङ्गौ स्तनौ
साकाङ्क्षं मुहुरीक्षते जललवप्रस्यन्दिनी लोचने[5] ॥ ११ ॥

सुसं०—सखि श्रुतं त्वया । ( घ )

साग०—( विहस्य । ) त्वमेव शृणु यस्या आलेख्यविज्ञानमेवं वर्ण्यते । ( ङ )

---

( क ) सहि[6] दंसिदं क्खु मेहाविणीए अत्तणो मेहावित्तणम् । ( ख ) भो[7] वअस्स अवि सुहाअदि दे लोअणम् । ( ग ) किं एसो भणिस्सदित्ति जं सच्चं जीविदमरणाणं अन्तरे वट्टामि । ( घ ) सहि सुदं तुए । ( ङ ) तुमं एव्व सुणु जाए आलेहविण्णाणं एवं वण्णीअदि ।

---

मेधाविनीत्वं बुद्धौ धारणपाटवम् । मेधावित्वमिति पाठे मेधाविनो भावो मेधावित्वमिति सामान्यनपुंसकत्वमाश्रित्य समाधेयम् । सुखयतीत्यत्र सुखशब्दात्तत्करोतीति णिच् । लोचनयोरिति पाठे कर्मणः शेषत्वविवक्षायां षष्ठी । जीवितमरणयोरिति । न सुखयतीत्युक्ते जीवितधारणासंभवान्मरणमेव शरणं भवेदन्यथा जीवितमिति भावः । कृच्छ्रादिति । मद्दृष्टिः मम नयने अस्याः ऊर्वोः युगं ऊरुयुगं सक्थिद्वयं कृच्छ्रात्प्रयासेन व्यतीत्य अतिक्रम्य । तद्दर्शनलोभात्तत्त्यागे प्रयासः । एवमितरत्रापि । नितम्बस्थले कट्याः पश्चाद्भागे सुचिरं भ्रान्त्वा । अनेन तस्य विशालतोक्ता । ततः तिस्रः वल्यः त्रिवली । 'दिक्संख्ये संज्ञायाम्' इति समासः । तस्याः तरंगैः विषमे दुरतिक्रमे मध्ये निस्पन्दतां निश्चलत्वमागता सती संप्रति तृषितेव संजाततृष्णा इव तुङ्गौ उन्नतौ स्तनौ शनैः आरुह्य जलस्य अश्रुजलस्य लवान् प्रस्यन्दत इति जललवप्रस्यन्दिनी लोचने आकाङ्क्षया स्पृहया सहितं यथा तथा साकाङ्क्षं मुहुः वारंवारमीक्षते । उत्प्रेक्षालंकारः । शार्दूलविक्रीडितं वृत्तम् ॥ ११ ॥ विशिष्टं ज्ञानं विज्ञानम् ।

---

१ वयस्य...सर्वम्; अभिहितम्. २ तया हि. ३ कृच्छ्रेणो०. ४ मे दृष्टिः. ५ अस्मात्परं–सुखयतीति किमुच्यते । इत्य०. ६ सहि इदं क्खु द०. ७ ( राजानं चालयन् । ) भो. ८ लोअणाणं, ०णं ण वेत्ति. ९ हद्धी किं; हद्धी हद्धी ण आणे किं. १० अस्मात्परं–विदू०–( राजानं चालयन् । ) भो अण्णं भणामि । अवि सुहाअदि दे लोअणाणम् । इत्य०. ११ तुए जं भट्टिणा मन्तिदं.

विदूषकः—भो वयस्य यस्य पुनरीदृश्योऽप्येवं समागमं बहु[1] मन्यन्ते तस्याप्यात्मन उपरि कः पराभवः येनात्रैव तयाऽऽलिखित-मात्मानं न प्रेक्षसे । (क)

राजा—(निर्वर्ण्य[4]।) वयस्य अनयाऽऽलिखितोऽहमिति यत्सत्यं ममात्मन्येव बहुमानस्तत्कथं न पश्यामि । पश्य—

भाति पतितो लिखन्त्यास्तस्या बाष्पाम्बुशीकरकणौघः ।
स्वेदोद्गम इव करतलसंस्पर्शादेष मे वपुषि ॥ १२ ॥

साग०—(आत्मगतम् ।) हृदय समाश्वसिहि समाश्वसिहि । मनो-रथोऽपि त एतावतीं भूमिं न गतः । (ख)

सुसं०—सखि त्वमेवैका श्लाघनीया यया भर्ताप्येवं मन्यते । (ग)

विदूषकः—(पार्श्वतोऽवलोक्य ।) भो वयस्य एतत्सरसकमलिनी-दलमृणालविरचितं तस्या एव मदनावस्थासूचकं शयनीयं लक्ष्यते । (घ)

राजा—वयस्य निपुणमुपलक्षितम् । तथा हि ।

परिम्लानं पीनस्तनजघनसङ्गादुभयत-
स्तनोर्मध्यस्यान्तः[2] परिमिलनमप्राप्य हरितम्[3] ।

---

(क) [4]भो वअस्स जस्स उण ईदिसीओ वि एँवं[5] समागमं बहुं[6] मण्णन्ति तस्स वि अत्तणो उवरि को परिँहवो[7] जेण एत्थ एव्व ताए आलिहिदं अत्ताणअं ण पेक्खसि । (ख) हिअअ समस्सस समस्सस । मणोरथो वि दे एत्तिअं भूमिं[8] ण गदो । (ग) सहि तुमं एव्व एक्का सलाहणीआ जाए भट्टा वि एवं मन्तीअदि[9] । (घ) भो वअस्स एदं सरसकमलिणीदलमुणालविरइदं[10] ताए एव्व मअणावत्थासूअअं सअणीअं लक्खीअदि ।

---

आलेख्यस्य चित्रकर्मणो विज्ञानमालेख्यविज्ञानम् । ईदृश्यः याभिस्तवापि कुतूहलमुत्पा-द्यते तादृश्यः । आत्मन उपरि स्वात्मविषये । परिभवोऽनादरः । **भातीति** । लिखन्त्याः तस्याः मे वपुषि पतितः एष बाष्पाम्बुशीकरकणौघः बाष्पाम्बूनां शीकराः तेषां कणाः सूक्ष्मावयवाः तेषामोघः समूहः तस्याः करतलसंस्पर्शाद् हेतोः स्वेदस्य घर्मस्य उद्गम इव भाति । उत्प्रेक्षालंकारः । आर्या वृत्तम् ॥ १२ ॥ मनोरथोऽपि ते इति । मनोरथादपि भर्ता मयि अधिकमनुरक्त इति भावः । सरसानि आर्द्राणि यानि कमलिनीनां दलानि पत्राणि मृणालानि बिसानि च तैः विरचितम् । मदनावस्था कामजनितसंताप इत्यर्थः तस्याः सूचकम् । निपुणं सूक्ष्मदृष्ट्येत्यर्थः । **परिम्लानमिति** । पीनस्तन-जघनसङ्गात् स्तनौ च जघनं च स्तनजघनम् । पीनं पुष्टं च तत्स्तनजघनं च तस्य

---

१ ०नि बहु०. २ यतः. ३ भरितं. ४ (फलकं निर्वर्ण्य ।) भो. ५ फलगे आलिहिअ एवं. ६ जा उण ईरिसीए पिअस्स बहुमाणअंतीए आलिखिदो तस्स दे अत्तणो परिहवो. ७ परिहवो जेण इमाए. ८ भूमिं ग०. ९ संतोसीअदि. १० अवरं स०.

इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः
कृशाङ्ग्याः संतापं वदति नलिनीपत्रशयनम् ॥ १३ ॥

अपि च ।

स्थितमुरसि विशालं पद्मिनीपत्रमेत-
त्कथयति न तथान्तर्मन्मथोत्थामवस्थाम् ।
अतिगुरुपरितापम्लापिताभ्यां यथास्याः
स्तनयुगपरिणाहं मण्डलाभ्यां ब्रवीति ॥ १४ ॥

विदूषकः—( नाट्येन मृणालिकां गृहीत्वा । ) भो वयस्य अयमपरस्तस्या एव पीनस्तनोष्माक्लिश्यमानकोमलमृणालहारः । तत्प्रेक्षतां भवान् । ( क )

राजा—( गृहीत्वोरसि विन्यस्य । ) अयि जडप्रकृते—

---

( क ) भो वअस्स अअं अवरो ताए एव्व पीणत्थणुम्हाकिलिसन्तकोमलमुणालहारो । ता पेक्खदु भवं ।

---

सङ्गात्संपर्कात् उभयतः उभयभागयोः परिम्लानं तन्निष्ठतापादिति भावः । तनोर्मध्यस्य अन्तः मध्यभागे परिमिलनं संपर्कमप्राप्य हरितं शोषाभावाद् हरिद्वर्णम् तथा च मनसिजसंतापात् श्लथे भुजौ लते इव भुजलते तयोः आक्षेपाः वलनानि चलनानि च तैः व्यस्तः विक्षिप्तः न्यासः रचना यस्य तत् । नलिनीपत्रशयनं कृशाङ्ग्याः कृशमङ्गं यस्यास्तथोक्तायाः संतापं वदति कथयति सूचयतीत्यर्थः । शिखरिणी वृत्तम् । 'रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी' इति तल्लक्षणम् ॥ १३ ॥ स्थितमिति । अस्या उरसि स्थितं विशालमेतत् पद्मिनीपत्रम् । अतिगुरुरतिमहांश्चासौ परितापश्च तेन म्लापिताभ्यां म्लानिं नीताभ्याम् । पाठान्तरे अतिशयश्चासौ परितापश्च तेन ग्लपितानि निःसहतां नीतानि अङ्गानि अवयवा यस्या इति अस्याः इत्यस्य विशेषणम् । मण्डलाभ्यां मन्मथोत्थां कामपीडाजन्यामवस्थां दशां तथा न ब्रवीति कथयति यथा स्तनयुगस्य परिणाहं विशालतां ब्रवीति । मालिनीवृत्तम् । लक्षणं—'ननमयययुतेयं मालिनी भोगिलोकैः' इति ॥ १४ ॥ मृणालिकां मृणालमालामित्यर्थः । पीनस्तनयोः ऊष्मा तेन पाठान्तरे पीनस्तनाभ्यां यत्स्खलनं तेन क्लिश्यमानश्चासौ मृणालहारश्च । पाठान्तरे क्लिश्यमानानि म्लायमानानीत्यर्थः कमलानि यत्र तादृशः । जडा मन्दा प्रकृतिः स्वभावो

---

१ चलनैः. २ विसिनी. ३ तथा मे. ४ मान्मथीयाम०. ५ अतिशय. ६ ग्लापि०. ७ अअं क्खु उवलद्धो अवरो ०त्थणजोग्गो किलि०; ०त्थणक्खलण०; ०सन्तकमलो, त्थणुण्णाहक्कि०.

परिच्युतस्तत्कुचकुम्भमध्या-
त्किं शोषमायासि मृणालहार ।
न सूक्ष्मतन्तोरपि तावकस्य
तत्रावकाशो भवतः किमु स्यात् ॥ १५ ॥

सुसं०—( स्वगतम्[1]। ) हा धिक् हा धिक् । गुर्वनुरागोत्क्षिप्तहृदयो भर्ताऽसंवद्धमपि मन्त्रयितुं प्रवृत्तः । तन्न युक्तमतः परमुपेक्षितुम् । भवतु । एवं तावत् । ( प्रकाशम् । ) सखि यस्य कृते त्वमागता सोऽयं ते पुरतस्तिष्ठति । ( क )

साग०—( सासूयम् । ) सुसंगते कस्य कृतेऽहमत्रागता । ( ख )

सुसं०—( विहस्य । ) अयि अन्यशङ्किते ननु चित्रफलकस्य तद् गृहाणैतम् । ( ग )

---

( क ) हद्धी हद्धी । गुरुआणुराओखित्तहिअओ भट्टा असंवद्धं पि मन्तेदुं पउँत्तो । ताँ ण जुत्तं अदो वरं उवेक्खिदुम् । भोदु । एँव्वं दाव । सहि जस्स किदे तुमं आगदा सो अअं ते पुरदो चिट्ठदि । ( ख ) सुसंगदे कस्स किदे अहं एत्थ आगर्दा । ( ग ) अइ अण्णसङ्किदे णं चित्तफलअस्स । ता गेण्ह एदम् ।

---

यस्य स जडप्रकृतिः तत्संबुद्धिः जडप्रकृते इति । परिच्युत इति । हे मृणालहार तत्कुचकुम्भमध्यात् कुचौ कुम्भौ इव कुचकुम्भौ । 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति समासः। तस्याः कुचकुम्भौ तत्कुचकुम्भौ तयोः मध्यात् परिच्युतः स्खलितः इति किं शोषं शुष्कतामायासि गच्छसि । खिद्यसे इत्यर्थः । अकारणं खिद्यसे इत्यहो ते जडप्रकृतित्वमित्यर्थः। यतः तावकस्य तवायमिति तावकस्तस्य सूक्ष्मतन्तोरपि तत्र तस्याः स्तनान्तरे अवकाशः स्थानं नास्ति भवतः तदपेक्षयातिमहतः किमु स्यात् कथं स संभवेत् । उपजातिश्छन्दः । तदुक्तं–' स्यादिन्द्रवज्रा यदि तौ जगौ ग उपेन्द्रवज्रा जतजास्ततो गौ। अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः॥' इति॥१५॥ गुरुश्चासौ अनुरागश्च तेन उत्क्षिप्तमाकुलितं हृदयं यस्य स तथोक्तः । असंवद्धमसमञ्जसम् । जडेऽपि हारे चेतनवद्व्यवहारादित्यर्थः । उक्तं च कालिदासेन–' कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु ' इति । न युक्तमुपेक्षितुं सागारिकार्थमुत्ताम्यतोऽस्य तस्या दर्शनेऽलं विलम्बेनेति भावः । शङ्का अस्या संजातासौ शङ्किता । अन्येन शङ्किता अन्यशङ्किता । यद्वा अन्यस्य शङ्का अन्यशङ्का सा संजाताऽस्याः । तत्संबोधनम् ।

---

१ स्वग. २ आत्म०. ३ अस्मात्परं—कहिं मुणालहारो कहिं तस्स उवालम्भो इत्य०. ४ ता अदो अवरं उण ण जुत्तं अपेक्खिदुं ( अपेक्षितुम् ). ५ इदं. ६ ०गदा को वा एत्थ चिट्ठदि.

सागः०—( सरोषम् । ) अकुशलास्मि तवेदृशानामालापानाम् । तदन्यतो गमिष्यामि । ( इति गन्तुमिच्छति[1] । ) ( क )

सुसं०—( सागरिकां हस्ते गृहीत्वा । ) अयि असहने इह तिष्ठ तावन्मुहूर्तं यावदस्मात्कदलीगृहाच्चित्रफलकं गृहीत्वागच्छामि । ( ख )

साग०—सखि एवं कुरु । ( ग )

( सुसंगता कदलीगृहाभिमुखं[2] परिक्रामति । )

विदू०—( सुसंगतां दृष्ट्वा ससंभ्रमम्[3] । ) भो वयस्य प्रच्छादयैतं चित्रफलकम् । एषा खलु देव्याः परिचारिका सुसंगतागता । ( घ )

( राजा पटान्तेन फलकं प्रच्छादयति । )

सुसं०—( उपसृत्य । ) जयतु जयतु भर्ता । ( ङ )

राजा—सुसंगते स्वागतम् । इहोपविश्यताम् ।

( सुसंगतोपविशति । )

राजा—सुसंगते कथमहमिहस्थो भवत्या ज्ञातः ।

सुसं०—( विहस्य । ) भर्तः न केवलं त्वमयमपि चित्रफलकेन सह सर्वो वृत्तान्तो मया विज्ञातः । तद्गत्वा देव्यै निवेदयिष्यामि । ( च )

विदू०—( अपवार्य सभयम् । ) भो वयस्य सर्वं संभाव्यते । मुखरा खल्वेषा गर्भदासी । तत्पारितोषिकेण संप्रीणयैनाम् । ( छ )

---

( क ) अंउसलम्हि[4] तुह ईदिसाणं आलावाणम् । ता अण्णदो गमिस्सम् । ( ख ) अइ असहणे इह चिट्ठ[5] दाव मुहुत्तअं जाव इमादो कदलीघरादो चित्तफलहं गेण्हिअ आअच्छामि । ( ग ) सहि एव्वं करेहि[6] । ( घ ) भो वअस्स पच्छादेहि एदं चित्तफलअम् । एसा क्खु देवीए परिचारिआ सुसंगदा आगदा । ( ङ ) जअदु जअदु भट्टा । ( च ) भट्टा[7] ण केवलं तुमं अअं पि चित्तफलएण सह सव्वो वुत्तन्तो मए विण्णादो । तं[8] गदुअ देवीए णिवेदइस्सम् । ( छ ) भो वअस्स सव्वं संभावीअदि । मुहरा क्खु एसा गब्भदासी । ता पारितोसिएण[9] संपीणेहि णम् ।

---

वत्सराजो मेऽभिप्रेत इति संजातशङ्के इति नर्मोक्तिः । ईदृशानामालापानां वक्रभाषणानामित्यर्थः । ससंभ्रमं सत्वरम् । संभ्रमकारणमुक्तमेषा खलु इत्यनेन । मुखरा दुर्मुखा । अप्रियकथनतत्परेत्यर्थः । गर्भदासी गर्भे दासी गर्भादारभ्य दासीति वा निन्दावचनम् ।

---

१ प्रस्थिता पदद्वयं ददाति. २ गृहप्रवेशं नाटयति. ३ सभयम्. ४ सुसंगदे अउ०; सहि अणिउणम्हि; अइ णिउणा क्खु तुमं वि ईदि०. ५ पडिवालेहि. ६ अस्मात्परं—सुसं०—एवं करेम्हि इत्य०. ७ ण के० देवो. ८ ता जाव. ९ परितोसेहि णं.

राजा—युक्तमुक्तं भवता । ( सुसंगतां हस्ते गृहीत्वा । ) सुसंगते क्रीडामात्रमेवैतत् । अकारणे त्वया देवी न खेदयितव्या । इदं ते पारितोषिकम् । ( कर्णाभरणं प्रयच्छति । )

सुसं०—( प्रणम्य सस्मितम् । ) भर्तः अलं शङ्कया । मयापि भर्तुः प्रसादेन क्रीडितमेव । तत्किं कर्णाभरणेन । एष एव मे गुरुः प्रसादो यत्कस्मात्त्वयाहमत्र चित्रफलक आलिखितेति कुपिता मे प्रियसखी सागरिका । तद्गत्वा प्रसादयत्वेनां भर्ता । ( क )

राजा—( ससंभ्रममुत्थाय । ) क्वासौ क्वासौ ।

सुसं०—इत इतो भर्ता । ( ख )

विदू०—भो गृह्णाम्येतं चित्रफलकम् । कदाऽपि पुनरप्येतेन कार्यं भविष्यति । ( ग )

सुसं०—भर्तः इयं सा । ( घ )

( सर्वे कदलीगृहान्निष्क्रामन्ति । )

साग०—( राजानं दृष्ट्वा सहर्षं ससाध्वसं सकम्पं च स्वगतम् । ) हा धिक्

---

( क ) भट्टा अलं सङ्काए । मए वि भट्टिणो पसाएण कीलिदं एव्व । ता किं कण्णाभरणेण । एसो ज्जेव मे गुरुओ पसाओ जं कीस तुए अहं एत्थ चित्तफलए आलिहिदत्ति कुविदा मे पिअसही साअरिआ । ता गदुअ पसादेदु णं भट्टा । ( ख ) इदो इदो भट्टा । ( ग ) भो गण्हामि एदं चित्तफलअम् । कदा वि पुणो वि एदिणा कज्जं भविस्सदि । ( घ ) भट्टा इअं सा ।

---

क्रीडामात्रं न तु वास्तवमत्र किंचिदिति भावः । भर्तुः प्रसादेन क्रीडितं भर्तुः प्रसादमवलम्ब्य विनोद एष कृतः इति भावः । एष एव गुरुकः प्रसादः अयमेव महाननुग्रहो भवेदित्यर्थः । 'सुसं०–भट्टा...ता पसादीअदु' इत्यनेन सुसंगतावचसा सागरिका मयालिखिता सागरिकया च त्वमिति सूचयता प्रसादोपन्यासेन बीजोद्भेदनाद् उपन्यास इति प्रतिमुखसंधेरङ्गमिदम् । क्वासौ क्वासौ इति–अत्र सागरिकानुरागबीजस्य दृष्टनष्टस्य वत्सराजेनानुसरणात्परिसर्प इति प्रतिमुखसंधेरङ्गमुक्तम् । सहर्षमिति ।

---

१ युक्तमभिहितम् । ( सुसंगताया अलकान्संवृत्य । ). २ अकारणं, तथापि नाकारणे...देवी खे०; व्यथयितव्या–कोपयितव्या. ३ एतन्नास्ति पुस्त०. ४ समर्पयति; इति कर्णादवतार्याभरणं दातुमिच्छति; हस्तादवतार्य कटकं कर्णाभरणं चात्मन उपनीय सुसंगतायै दत्त्वा. ५ स० प्र० गृह्णाति. ६ ( सहसो० ) दर्शय दर्शय । क्वा०. ७ निष्क्रमणं नाटयन्ति; निष्क्रान्ताः. ८ सस्पृहं दृष्ट्वा ससाध्वसं चात्मगतम्. ९ अलं सङ्काए एदिणा भट्टुणो पसादेण अ । कीलिदं जेव्व; भट्टिणीए पसादेण बहुतरं कीलिदं जेव्व । एसो उण मे गुरुओ पसादो करीअदु जं कीस ०दोत्ति भणिअ कुविदा साग० पसादीअदु ( प्रसाद्यताम् ). १० एसा पसादीअदु. ११ (आत्मगतम् । ) गे०; इमस्स कज्जं; इमिणा...होदि.

हा धिक् । एतं प्रेक्ष्यातिसाध्वसेन न शक्नोमि पदात्पदमपि गन्तुम् । तत्किमिदानीमत्र करिष्यामि । ( क )

विदू०—( सागरिकां दृष्ट्वा । ) ही ही भोः आश्चर्यमाश्चर्यम् । ईदृशं रूपं मनुष्यलोके न पुनर्दृश्यते । तत्तर्कयामि प्रजापतेरप्येत-न्निर्माय विस्मयः समुत्पन्न इति । ( ख )

राजा—वयस्य ममाप्येवं मनसि वर्तते ।

> दृशः पृथुतरीकृता जितनिजाब्जपत्रत्विष-
> श्चतुर्भिरपि साधु साध्विति मुखैः समं व्याहृतम् ।
> शिरांसि चलितानि विस्मयवशाद् ध्रुवं वेधसा
> विधाय ललनां जगत्त्रयललामभूतामिमाम् ॥ १६ ॥

साग०—( सासूयं सुसंगतामालोक्य । ) सखि ईदृशः चित्रफलक-स्त्वयाऽऽनीतः । ( इति गच्छति । ) ( ग )

राजा—

> दृष्टिं रुषा क्षिपसि भामिनि यद्यपीमां
> स्निग्धेयमेष्यति तथापि न रूक्षभावम् ।
> त्यक्त्वा त्वरां व्रज पदस्खलितैरयं ते
> खेदं करिष्यति गुरुर्नितरां नितम्बः ॥ १७ ॥

---

( क ) हद्धी हद्धी । एदं पेक्खिअ अतिसद्धसेण न सक्कणोमि पदादो पदं वि गन्तुम् । ता किं दाणिं एत्थ करिस्सम् । ( ख ) ही ही भोः अच्चरिअं अच्चरिअम् । ईदिसं रूवं माणुसलोए ण पुणो दीसदि । ता तक्केमि पआवइणो वि एदं णिम्मविअ विम्हओ समुप्पण्णोत्ति । ( ग ) सहि ईदिसो चित्तफलओ तुए आणीदो ।

---

अभीष्टजनदर्शनाद्धर्षः । आकस्मिकदर्शनात्साध्वसं कम्पश्च । कन्यारत्नमिति पाठे कन्यानां रत्नं कन्यारत्नमिति संबन्धसामान्यषष्ठ्या समासः । दृश इति । जगतां त्रयं जगत्त्रयं तस्य ललाम भूता तां ललामभूतां भूषणस्वरूपामिमां ललनां विधाय स्रष्ट्वा वेधसा ब्रह्मणा ध्रुवं निश्चितं विस्मयस्य वशादधीनत्वाद्विस्मयवशात् । जिता निजस्य अब्जस्यासनभूतस्य कमलस्य पत्राणां त्विट् शोभा याभिस्तादृश्यः दृशः दृष्टयः पृथुतरीकृताः विस्फारिताः । तथा चतुर्भिरपि मुखैः समं युगपत्साधु साधु इति व्याहृतं भाषितम् । शिरांसि चलितानि चालितानि च । उत्प्रेक्षालङ्कारः । पृथ्वी वृत्तम् । 'जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः' इति लक्षणात् ॥ १६ ॥ दृष्टिमिति । हे भामिनि कोपने । 'कोपना सैव भामिनी' इत्यमरः । यद्यपि इमां दृष्टिं रुषा क्रोधेन क्षिपसि तथापि स्निग्धा स्नेहपूर्णेयं रूक्षभावं रूक्षतां न एष्यति यास्यति । त्वरां त्यक्त्वा व्रज गच्छ । यतः त्वरागमने पदस्खलितैः पदानां विसंष्ठुलैः पातैः अयं तव गुरु पृथुः

---

१ प्येतदेव. २ वेधसः. ३ राजानं दृष्ट्वा सरोषम्. ४ कोपाद् गच्छति; गन्तुमिच्छति. ५ तव; पदैः. ६ हि. ७ गमिष्यति. ८ नियतम्. ९ उरुत्थम्भेण...०णोमि इदो गन्तुं; चलिदुम्. १० वा. ११ कण्णआरअणं, पि णाम रू०; मणुस्स०. १२ सुसंगदे ईदिसो सो.

सुसं०——भर्तः अतिकोपना खल्वेषा । तद्धस्ते गृहीत्वा प्रसादयैनाम् । ( क )

राजा—(सानन्दम् ।) यथाह भवती । ( सागरिकां हस्ते गृहीत्वा स्पर्शसुखं नाटयति । )

विदू०——भोः एषा खलु त्वयाऽपूर्वा श्रीः समासादिता । ( ख )

राजा——वयस्य सत्यम् ।

श्रीरेषा पाणिरप्यस्याः पारिजातस्य पल्लवः ।
कुतोऽन्यथा स्रवत्येष स्वेदच्छद्मामृतद्रवः ॥ १८ ॥

सुसं०——सखि अतिनिष्ठुरेदानीमसि त्वं यैवं भर्त्रा हस्ते गृहीतापि कोपं न मुञ्चसि । ( ग )

साग०——( सभ्रूभङ्गम् । ) अयि सुसंगते अद्यापि न विरमसि । (घ)

राजा——अयि प्रसीद । न खलु युक्तः सखीजन एवंविधः कोपानुबन्धः ।

---

(क) भट्टा अदिकोवणा क्खु एसा । ता हत्थे गेण्हिअ पसादेहि णम् । ( ख ) भो एसा क्खु तुए अपुव्वा सिरी समासादिदा । ( ग ) सहि अदिणिट्ठुरा दाणिं सि तुमं जा एवं भट्टिणा हत्थे गिहीदा वि कोवं ण मुञ्चसि । ( घ ) अइ सुसङ्गदे अज्ज वि ण विरमेसि ।

---

नितम्बः ते नितरामत्यन्तं खेदं श्रमं करिष्यति जनयिष्यति । वसन्ततिलकं वृत्तम् । लक्षणमुक्तम् ॥ १७ ॥ कोपना कोपशीला कुप क्रोधे इत्यस्मात् 'क्रुधमण्डार्थेभ्यश्च' इत्यनेन ताच्छील्ये युच् । श्रीरिति । एषा इयं सुन्दरी श्रीः लक्ष्मीः । अस्याः पाणिश्च पारिजातस्य कल्पवृक्षस्य पल्लवः किसलयः । अत्र हेतुमाह-अन्यथा एवं न चेत् कुतः एष स्वेदः छद्म व्याजः यस्य स स्वेदच्छद्मा घर्माम्बुरूपः अमृतद्रवः अमृतरसः स्रवति । ०द्रवमिति पाठे एष पाणिः ०द्रवं स्रवति इति योज्यम् । रूपकालंकारः ॥ १८ ॥ अत्र राजा सागरिकां हस्ते गृहीत्वा इत्यादिना स्वेदच्छद्मामृतद्रव इत्यन्तेन नायकयोः साक्षादन्योन्यदर्शनादिना सविशेषानुरागोद्घाटनात्पुष्पाख्यं प्रतिमुखसंधेरङ्गम् । अतिनिष्ठुरा अतिकठोरहृदया । इतरा मानिन्यः प्रियेण हस्तग्रहे मानं मुञ्चन्ति त्वं तु तथा न करोषि इति निष्ठुरत्वम् । सभ्रूभङ्गं भ्रुवोर्भङ्गः उन्नयनं तेन सहितं यथा तथा । न विरमसि एवंविधभाषणादिति शेषः । अत्र सखि अतिनिष्ठुरासीत्यादिना विरमसीत्यन्तेन अनुरागबीजोद्घाटनान्वयेन धृतिः ( नर्मजा द्युतिः ) इत्यङ्गं दर्शितम् । कोपानुबन्धः

---

१ सानन्दं तथा करोति । हस्ते गृहीत्वा स्पर्शं ना०. २ पतत्ये०...द्रवम्. ३ ०ङ्गमीषाद्विहस्य. ४ प्रिये सागरिके न खलु सखीजने युक्त एवं कोपा०...कर्तुम् युज्यते. ५ अस्मादनन्तरं—विदू०—बुभुक्खिदो बम्हणो विअ किं कुप्पसि । सुसं०—साहि तुए सह ण बोलइस्सं ( वक्ष्यामि ). राजा—अयि कोपने नैतद्युक्तं समानप्रतिपत्तिषु सखीषु । इत्यधि० क्वचित्. ६ अदिउच्चसिरी. ७ अदिकोपणा क्खु. ८ हत्थे-त्था-वलम्बिदा. ९ अज्ज वि दाणिं.

विदू०—एषा खल्वपरा देवी वासवदत्ता । ( क )

( राजा सचकितं सागरिकाया हस्तं मुञ्चति । )

साग०—( ससंभ्रमम् । ) सुसंगते किमिदानीमत्र करिष्ये । ( ख )

सुसं०—सखि एतां तमालवीथिकामन्तरयित्वा निष्क्रामावः । ( ग )

( निष्क्रान्ते । )

राजा—( पार्श्वतोऽवलोक्य । ) वयस्य क्व सा देवी वासवदत्ता ।

विदू०—भो न जानामि क्व सा । मया एषा खल्वपरा देवी वासवदत्ताऽतिदीर्घरोषतयेति भणितम् । ( घ )

राजा—धिङ् मूर्ख ।

प्राप्ता कथमपि दैवात्कण्ठमनीतैव सा प्रकटरागा ।
रत्नावलीव कान्ता मम हस्ताद् भ्रंशिता भवता ॥ १९ ॥

( ततः प्रविशति वासवदत्ता काञ्चनमाला च । )

वासवदत्ता—हञ्जे काञ्चनमाले अथ कियद्दूर इदानीं सार्यपुत्रेण परिगृहीता नवमालिका । ( ङ )

काञ्चनमाला—भर्त्रि एतत्कदलीगृहमतिक्रम्य दृश्यत एव । ( च )

वासव०—तदादेशय मार्गम् । ( छ )

---

( क ) एसा क्खु अवरा देवी वासवदत्ता । ( ख ) सुसंगदे किं दाणिं एत्थ करिस्सम् । ( ग ) सहि एदं तमालवीथिअं अन्तरिअ णिक्कमम्ह । ( घ ) भो ण जाणामि क्व सा । मए एसा क्खु अवरा देवी वासवदत्ता अदिदीहरोसदाएत्ति भणिदं । ( ङ ) हञ्जे कञ्चणमाले अध केत्तिअ दूरे दाणिं सा अज्जउत्तेण परिगिहीदा णोमालिआ । ( च ) भट्टिणि एदं कदलीघरअं अदिक्कमिअ दीसदि एव्व । ( छ ) ता आदेसेहि मग्गम् ।

---

अविरतः कोपः दीर्घरोष इत्यर्थः । एषा सागरिका । राज्ञावगतार्थस्तु एषा इयमागतापरा देवी वासवदत्तेति । अत्र वासवदत्तागमने । प्राप्तेति । कथमपि दैवात्सुदैशात्प्राप्ता । सागरिका रत्नावली च । प्रकटरागा प्रकटः स्पष्टं दृश्यमानः रागः अनुरागः पक्षे प्रभा यस्याः सा । कान्ता हृदयंगमा । उभयत्र समानम् । सा रत्नावली रत्नमालेव कण्ठमानीता एव भवता त्वया मम हस्ताद् भ्रंशिता प्रच्याविता । श्लेषोपमयोरङ्गाङ्गिभावरूपः संकरः । आर्यावृत्तम् ॥ १९ ॥ अत्र राजा धिङ् मूर्ख इत्यारभ्य भ्रंशिता भवता

---

१ सभ्रूभङ्गम्. २ पार्श्वाणि; समन्तादव० सविस्मयम्. ३ क्वासौ. ४ अनीत्वैव. ५ ०दत्ता मे पडिभादि; अवरा वास०. ६ तमालविडवं, कदलीवीटिआए णि०. ७ भो सा एदम्; सा क्खु; वअस्स एदं क्खु मए भणिदं एसा क्खु...अदिकोवणदाए; एसा वास० अवरा दीहरोसदाए संवुत्तात्ति. ८ एव्व । ता एदु एदु देवी. ९ मग्गं । तत्थ एव्व गच्छम्ह.

काञ्चन०---एत्वेतु भर्त्री । (क)

राजा---वयस्य क्वेदानीं प्रिया[१] द्रष्टव्या ।

काञ्चन०---भर्त्रि यथा समीपे भर्ता मन्त्रयते तथा तर्कयामि भर्त्रीमेव प्रतिपालयंस्तिष्ठतीति । तदुपसर्पतु भर्त्री । (ख)

वासव०--(उपसृत्य ।) जयतु जयत्वार्यपुत्रः । (ग)

राजा---(अपवार्य ।) वयस्य प्रच्छादय चित्रफलकम्[२] ।

(विदूषकः कक्षायां फलकं प्रक्षिप्योत्तरीयेण प्रच्छादयति[३] ।)

वासव०---आर्यपुत्र अथ कुसुमिता नवमालिका । (घ)

राजा[४]---देवि प्रथममिहागतैरप्यस्माभिस्त्वं चिरयसीति नैव दृष्टा[५] । तदेहि । सहितावेव तां पश्यावः ।

वासव०--(निर्वर्ण्य ।) आर्यपुत्र मुखरागादेव मया ज्ञातं यथा कुसुमिता नवमालिकेति । तन्न गमिष्यामि । (ङ)

विदू०---ही ही भोः जितं जितमस्माभिः । (इति बाहू प्रसार्य नृत्यति । नृत्यतः कक्षान्तरात्फलकः पतति[६] ।) (च)

(राजा अपवार्य विदूषकमङ्गुल्या[७] तर्जयति ।)

विदू०---(अपवार्य ।) भो मा कुप्य । तूष्णीकस्तिष्ठ । अहमेवात्र ज्ञास्यामि । (छ)

---

(क) एदु एदु भट्टिणी । (ख) भट्टिणि जहा समीवे भट्टा मन्तेदि तह तक्केमि भट्टिणीं एव्व पडिवालअन्तो चिट्ठदित्ति । ता उवसप्पदु भट्टिणी[८] । (ग) जअदु जअदु अज्ज-उत्तो । (घ) अज्जउत्त अह[१०] कुसुमिदा णोमालिआ । (ङ) अज्जउत्त मुहरागादो[११] एव्व मए जाणिदं जहा कुसुमिदा णोमालिआत्ति । ता ण गमिस्सम् । (च)[१२] ही ही भो जिदं जिदं अम्हेहिं । (छ) भो मा कुप्प । तुण्हीओ[१३] चिट्ठ । अहं एव्व एत्थ जाणिस्सम् ।

---

इत्यन्तेन वत्सराजस्य सागरिकासमागमरूपहितस्य वासवदत्ताप्रवेशसूचकेन विदूषक-वचसा निरोधात् निरोधनाख्यं प्रतिमुखसंधेरङ्गं दर्शितम् । उत्तरीयेण उपरिवस्त्रेण । उत्तरस्मिन्देहभागे भवमुत्तरीयम् । मुखरागास्त्वन्मुखकान्तिविशेषात् । आर्यपुत्रमुखरागा-दिति समस्तं वा पदम् । नृत्यत इत्यादि एवंविधा विदूषकस्यानवधानता सर्वत्रैव ।

---

१ प्रियतमा. २ अस्मात्परं–देवि स्वागतम् । इत आस्यताम्. ३ गृहीत्वा कक्षे निक्षि-पति. ४ राजा—(सस्मितम्). ५ न सा दृष्टा, दृष्टा नवमालिका; समेनावेष. ६ अस्मा-त्परं–तद् दृष्ट्वा विषादं नाटयति । इत्य०. ७ ०ल्यग्रेण; ०ल्या दर्शयन्वसन्तकमुखं पश्यति. ८ तुमं. ९ देवी. १० अध सच्चकं जेव्व. ११ ०राएण...सा णो०. १२ भोदि जइ एव्वं ना जिदं. १३ भो तुण्हीओ; तुमं चि०.

काञ्चन०—( फलकं गृहीत्वा निरूप्यापवार्य । ) भर्त्रि प्रेक्षस्व तावत्कि-मत्र चित्रफलक आलिखितम् । ( क )

वासव०—( निरूप्यापवार्य । ) काञ्चनमाले अयमार्यपुत्रः । इयं पुनः सागरिका । किं न्वेतत् । ( ख )

काञ्चन०—भर्त्रि अहमप्येतदेव चिन्तयामि । ( ग )

वासव० —( सकोपहासम् । ) आर्यपुत्र केनेदमालिखितम् । ( घ )

राजा—( सवैलक्ष्यस्मितम् । अपवार्य । ) वयस्य किं ब्रवीमि ।

विदू०—( अपवार्य । ) भो मा चिन्तय । अहमुत्तरं दास्यामि । ( प्रकाशं वासवदत्तां प्रति । ) भवति मान्यथा संभावय । आत्मा किल दुःखेना-लिख्यत इति मम वचनं श्रुत्वा प्रियवयस्येनैतदालेख्यविज्ञानं दर्शितम् ।(ङ)

राजा—यथाह वसन्तकस्तथैवैतत् ।

वासव०—( फलकं निर्दिश्य । ) आर्यपुत्र एषापि यापरा तव समीप आलिखिता तत्किमार्यवसन्तकस्य विज्ञानम् । ( च )

राजा—( सस्मितम् । ) देवि अलमन्यथा शङ्कया । इयं हि कापि कन्यका स्वचेतसैव परिकल्प्यालिखिता । न तु दृष्टपूर्वा ।

विदू०—भवति सत्यं सत्यम् । शपे ब्रह्मसूत्रेण यदीदृशी कदाप्य-स्माभिर्दृष्टपूर्वा । ( छ )

---

( क ) भट्टिणि पेक्ख दाव किमेत्थ चित्तफलए आलिहिदं । ( ख ) कञ्चणमाले अअं अज्जउत्तो । इअं उण साअरिआ । किं ण्णेदम् । ( ग ) भट्टिणि अहं पि एदं एव्व चिन्तेमि । ( घ ) अज्जउत्त केण एदं आलिहिदम् । ( ङ ) भो मा चिन्तेहि । अहं उत्तरं दाइस्सम् । भोदि मा अण्णथा संभावेहि । अप्पा किल दुक्खेण आलिहीअदि त्ति मम वअणं सुणिअ पिअवअस्सेण एदं आलेक्खविण्णाणं दंसिदम् । ( च ) अज्जउत्त एसावि जा अवरा तुह समीवे आलिहिदा ता किं अज्जवसन्तअस्स विण्णाणम् । (छ) भोदि सच्चं सच्चम् । सवामि बम्हसुत्तेण जइ ईदिशी कदावि अम्हेहिं दिट्ठपुव्वा ।

---

मा कुप्येत्यत्र निषेधार्थो माशब्दो न तु माङ्यम् । सवैलक्ष्यस्मितमिति । विलक्षस्य भावः वैलक्ष्यम् । ‘ विलक्षो विस्मयान्विते ’ इत्यमरः । वैलक्ष्यद्योतकं स्मितं वैलक्ष्यस्मितं तेन सहितं यथा तथा सवैलक्ष्यस्मितम् । आत्मा स्वस्याकृतिः । ब्रह्मसूत्रेण यज्ञोपवीतेन ।

---

१ ( फ० गृहीत्वा ) भट्टिणि. २ ( निर्वर्ण्य स्वगतम् । ) अअं...रिआ । ( प्रकाशं राजानं प्रति । ) अज्जउत्त किं ण्णेदम्. ३ ० स्मितं कृत्वाप०, सवैलक्ष्यं विदूषकं संज्ञा-पयति । विदू०–अप्पा किल इ०. ४ स्मितं कृत्वा; सवैलक्ष्यस्मितम्. ५ संभावितेन । इयं हि मया स्वचेतसा विकल्प्य कन्याभिलि०. ६ पेक्खदु भट्टिणि किमेत्थ० आलि० ति. ७ भोदि अप्पाथ किल इ०. ८ सच्चं सवामि. ९ बम्हणत्तणेण ( ब्राह्मण्येन ).

काञ्च०---( अपवार्य । ) भर्त्रि घुणाक्षरमपि कदापि संभवत्येव।(क)

वास०---( अपवार्य । )अयि ऋजुके वसन्तकः खल्वेषः। न जानासि त्वमेतस्य वक्रभणितानि।( प्रकाशम्। ) आर्यपुत्र मम पुनरेतच्चित्रफलकं प्रेक्षमाणायाः शीर्षवेदना समुत्पन्ना । तद्गमिष्याम्यहम् । (प्रस्थिता।)(ख)

राजा---( पटान्तेन गृहीत्वा । ) देवि । 

प्रसीदेति ब्रूयामिदमसति कोपे न घटते
करिष्याम्येवं नो पुनरिति भवेदभ्युपगमः ।
न मे दोषोऽस्तीति त्वमिदमपि च ज्ञास्यसि मृषा
किमेतस्मिन्वक्तुं क्षममिति न वेद्मि प्रियतमे ॥ १० ॥

वासवदत्ता---( सविनयं पटान्तमाकर्षन्ती । ) आर्यपुत्र मान्यथा संभावय । सत्यमेव मां शीर्षवेदना बाधते । तद्गमिष्यामि । ( ग )

---

( क ) भट्टिणि घुणक्खरं पि कदावि संभवदि ज्जेव्व ।(ख) अइ उज्जुए वसन्तओ क्खु एसो । ण जाणासि तुमं एदस्स वक्कभणिदाइं । अज्जउत्त मम उण एदं चित्तफलअं पेक्खन्तीए सीसवेअणा समुप्पण्णा । ता गमिस्सं अहम् । ( ग )अज्जउत्त मा अण्णधा संभावेहि । सच्चं एव्व मं सीसवेअणा बाधेदि । ता गमिस्सम् ।

---

घुणाक्षरमिति। घुणाख्यः कीटविशेषः दारुणि लिखन् यदृच्छयाऽक्षराकारं रेखाविशेषं जनयति । अतो यदृच्छया अन्यवस्तुसंवादि किंचिदपि घुणाक्षरमित्युच्यते । यथात्र तथा प्रतिपादिता राज्ञालिखिता आकृतिः । ऋजुके सरले । कपटमजानति इत्यर्थः। वक्रभणितानि व्याजोक्तीः । शीर्षवेदना राज्ञः परगतचित्तत्वादिति भावः। अत्र 'वास०-( फलकं निर्दिश्य ।) अज्जउत्त' इत्यादिना ' सीसवेदणा समुप्पणा ' इत्यन्तेन वासवदत्तया वत्सराजस्य सागरिकानुरागोद्भेदनात्प्रत्यक्षनिष्ठुराभिधानं वज्रमित्यङ्गम्। प्रसीदेति। हे देवि प्रसीद मयि प्रसन्ना भव इति ब्रूयां चेद् इदं क्रोधे असति अविद्यमाने । त्वया क्रोधो न दर्शित इति न घटते । न युक्तमित्यर्थः। एवं पुनः नो करिष्यामि इति ब्रूयां चेद् अभ्युपगमः अकृतस्याङ्गीकारः भवेत् । मे दोषो नास्ति इति ब्रूयां चेद् इदमपि त्वं मृषा मिथ्याभाषितं इति ज्ञास्यसि। एवं हे प्रियतमे अस्मिन्प्रस्तावे किं वक्तुमुचितमिति न वेद्मि । काव्यलिङ्गमलंकारः । शिखरिणी वृत्तम्। लक्षणमुक्तं ( २।१३ ) अत्र। चित्रगतयोर्नायकयोर्दर्शनात्कुपिताया वासवदत्ताया

---

१ इत्युत्थाय गच्छति, गन्तुमिच्छति. २ पटान्ते. ३ देवि प्रसीद प्रसीद. ४ करिष्येऽहं नैवं. ५ हि. ६ कदापि ईदिसं घु० संभ० ता अलं कोपेण. ७ अज्ज एव. ८ भणिदीओ ( भणितीः ). ९ ममात्रि. १० ता इहं तिठ्ठदु अज्जउत्तो । अहं गमि०. ११ मत्त्रकं...म.

( उभे निष्क्रान्ते । )

विदूषकः—( पार्श्वाण्यवलोक्य । ) भो दिष्ट्या वर्धसे । क्षेमेणास्माकमतिक्रान्ताऽकालवातावली । ( क )

राजा—धिङ् मूर्ख कृतं परितोषेण । यान्त्याऽऽभिजात्याग्निगूढो न लक्षितस्त्वया देव्याः कोपानुबन्धः ।

भ्रूभङ्गे सहसोद्गतेऽपि वदनं नीतं परां नम्रता-
मीषन्मां प्रति भेदकारि हसितं नोक्तं वचो निष्ठुरम् ।
अन्तर्बाष्पजडीकृतं प्रभुतया चक्षुर्न विस्फारितं
कोपश्च प्रकटीकृतो दयितया मुक्तश्च न प्रश्रयः ॥ २१ ॥

तदेहि । देवीमेव प्रसादयितुं गच्छावः ।

( इति निष्क्रान्ताः सर्वे । )

इति कदलीगृहो नाम द्वितीयोऽङ्कः ।

---

( क ) भो दिट्ठिआ वड्ढसि । क्खेमेण अम्हाणं अदिक्कन्ता अआलवादावली ।

---

अनुनयात्पर्युपासनमित्यङ्गमिदम् ॥ २० ॥ अयुक्तः कालः अकालः तत्र वातावली इव । भ्रूभङ्ग इति । भ्रुवोर्भङ्गः भ्रूभङ्गः भ्रुकुटिबन्धस्तस्मिन्सहसा उन्नतेऽपि । क्रोधस्य द्योतकमेतत् । दयितया वदनं परां नम्रतां नीतम् । मां प्रति मामुद्दिश्य भेदं करोतीति भेदकारि हृदयस्पर्शि हसितम् । तथापि निष्ठुरं वचो नोक्तम् । अन्तः मध्ये यद्बाष्पं तेन जडीकृतमपि चक्षुः न विस्फारितं विकासितम् । एवं दयितया कोपः प्रकटीकृतः च प्रश्रयः विनयः न मुक्तश्च । शार्दूलविक्रीडितं वृत्तम् ॥ २१ ॥

इति रत्नावलीटीकायां द्वितीयोऽङ्कः ॥ २ ॥

---

१ इति. २ अस्मात्परं–विदू०—कहं कुविदा गता. राजा—वयस्य आभिजात्यविनिगूढः...बन्धः । तथा हि. ३ सहसोत्थिते. ४ तस्याः संप्रति. ५ अस्मात्परं–विदू०–गदा देवी वा० ता कीस तुमं अरण्णरुदिअं करोसि. ६ देवीसकाशमेव ग०; देवीं प्रसादयितुमभ्यन्तरमेव; देवीं गत्वा प्रसादयामि; सर्वथा देवीप्रसादनं मुक्त्वा नान्यत्रोपायमाकलयामि. ७ निष्क्रान्तौ. ८ रत्नावलीनामप्रधाननाटिकायां द्वि०. ९ भो वअस्स एदा क्खु अदि० अम्हाणं अआलआसकारिणी.

## तृतीयोऽङ्कः ।

( ततः प्रविशति मदनिका । )

**मदनिका**—( आकाशे । ) कौशाम्बिके कौशाम्बिके अपि दृष्टा त्वया भर्तुः सकाशे काञ्चनमाला न वा । ( कर्णं दत्त्वा[1] । ) किं भणसि । कोऽपि कालस्तस्या आगत्य गताया इति । तत्कुत्रेदानीं प्रेक्षिष्ये । ( अग्रतोऽवलोक्य[2] । ) कथमेषा खलु काञ्चनमालेत एवागच्छति । तद्यावदेनामुपसर्पामि । ( क )

( ततः प्रविशति काञ्चनमाला । )

**काञ्चनमाला**—( सोत्प्रासम्[3] । ) साधु रे अमात्यवसन्तक साधु । अतिशयितस्त्वयाऽमात्ययौगन्धरायणोऽनया संधिविग्रहचिन्तया । ( ख )

**मद०**—( उपसृत्य सस्मितम् । ) हला काञ्चनमाले किमार्यवसन्तकेन कृतं येन स एवं श्लाघ्यते । ( ग )

**काञ्चन०**—हला मदनिके किं तवैतेन ज्ञातेन । त्वमिदं रहस्यं रक्षितुं न पारयसि । ( घ )

---

( क ) कोसम्बिए[4] कोसम्बिए अवि दिट्ठा तुए भट्टिणो सआसे कञ्चणमाला ण वा । किं भणासि । कोवि कालो ताए आअच्छिअ गदाए त्ति । ता कहिं दाणिं पेक्खिस्सम् । कहं एसा क्खु कञ्चणमाला इदो एव्व आअच्छदि । ता जाव णं उवसप्पामि । ( ख ) साहु रे अमच्चवसन्तअ साहु । अदिसइदो तुए अमच्चजोगन्धराअणो[6] इमाए संधिविग्गहचिन्ताए । ( ग ) हला कञ्चणमाले किं अज्जवसन्तएण किदं जेण सो एव्वं सलाहिज्जदि । ( घ ) हला[7] मअणिए किं तव एदिणा जाणिदेण । तुमं[8] इमं रहस्सं रक्खिदुं ण पारेसि ।

---

इत आरभ्य गर्भसंधिः यत्र प्रतिमुखसंधौ स्तोकोद्भिन्नस्य बीजस्य मुहुरन्वेषणं क्रियते । अथ वत्सराजस्य सागरिकायामनुरागं वर्णयितुं प्रवेशकमवतारयति—ततः प्रविशतीत्यादिना । **आकाशे इति** । एतदेवाकाशभाषितमित्युच्यते—'किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत् । श्रुत्वेवानुक्तमप्येकस्तत्स्यादाकाशभाषितम् ॥' इति तल्लक्षणम् । कोऽपि कियानपि । सोत्प्रासं सोल्लुण्ठनं सोपहासमिति यावत् । अमा सह भवः अमात्यः संधिश्च विग्रहश्च संधिविग्रहौ तयोश्चिन्तया विचारेण । विदूषकपक्षे संधिविग्रहौ नायिकयोः संयोगविप्रयोगौ । अत्र साधु रे इत्यारभ्य प्रवेशकेन अभूताहरणाख्यं

---

१ दत्त्वाकर्ण्य, आकर्ण्य. २ परिक्रम्याग्र०. ३ सोल्लासम्. ४ कौमोदिए. ५ पिअसहिं पे०. ६ ०अणो वि. ७ सहि नव किं एदिणा पुच्छिदेण पओजणम्. ८ ण मे इमं ...०दुं पारेसि.

मद०—शपे देव्याश्चरणाभ्यां यदि कस्यापि पुरतः प्रकाशयामि । (क)

काञ्च०—यद्येवं तच्छृणु । अद्य खलु मया राजकुलात्प्रतिनिवर्तमानया चित्रशालिकाद्वारे वसन्तकस्य सुसंगतया सममालापः श्रुतः । (ख)

मद०—( सकौतुकम् । ) सखि कीदृशः । ( ग )

काञ्च०—यथा सुसंगते न खलु सागरिकां वर्जयित्वा अन्यत्किमपि प्रियवयस्यस्यास्वस्थतायाः कारणम् । तच्चिन्तयात्र प्रतीकारमिति । ( घ )

मद०—ततः सुसंगतया किं भणितम् । ( ङ )

काञ्च०—एवं तया भणितम् । अद्य खलु देव्या चित्रफलकवृत्तान्तशङ्कितया सागरिकां रक्षितुं मम हस्ते समर्पयन्त्या यन्नेपथ्यं मे प्रसादीकृतं तेनैव विरचितभट्टिनीवेषां सागरिकां गृहीत्वाहमपि काञ्चनमालावेषधारिणी भूत्वा प्रदोष इहागमिष्यामि । त्वमपीहैव चित्रशालिकाद्वारे मा प्रतिपालयिष्यसि । ततो माधवीलतामण्डपे तया सह भर्तुः समागमो भविष्यतीति । ( च )

---

( क ) सवामि [1]देवीए चलणेहिं जदि कस्स वि पुरदो पआसेमि । ( ख ) जइ एवं ता सुणु[2] । अज्ज क्खु मए राअउलाओ [3]पडिणिउत्तमाणाए चित्तसालिआदुआरे वसन्तअस्स सुसंगदाए [4]समं आलावो सुदो । ( ग ) [5]सहि कीदिसो । ( घ ) जइ[6] सुसंगदे ण क्खु साअरिअं वज्जिअ अण्णं किं पि पिअवअस्सस्स असच्छदाए कारणं । ता चिन्तेहि एत्थ पडिआरंत्ति । ( ङ ) [7]तदो सुसंगदाए किं भणिदम् । ( च ) एव्वं ताए भणिदम् । अज्ज खु देवीए चित्तफ[8]लअवुत्तन्तसङ्किदाए सा[9]अरिअं रक्खिदुं मम हत्थे समप्पअन्तीए जं णेव[10]त्थं मे पसादीकिदं तेण ज्जेव विरचिदभट्टिणीवेसं साअरिअं गेण्हिअ अहं पि कञ्चणमालावेसधारिणी भविअ [11]पओसे इह आगमिस्सम् । तुमं पि [12]इह एव्व चित्तसालिआदुआरे मं पडिवालइस्ससि । तदो माहवीलदामण्डवे ताए सह भट्टिणो समा[13]गमो भविस्सादित्ति ।

---

गर्भसंधेः अङ्गमुक्तम् । चित्राणां शाला चित्रशाला सैव चित्रशालिका । स्वार्थे कः । सागरिकां वर्जयित्वा सागरिकानुरागनिमित्तमेवेदमस्वास्थ्यम् । चित्रफलकसंबन्धी वृत्तान्तः चित्रफलकवृत्तान्तस्तेन संजातशङ्कया । नेपथ्यं वस्त्राभरणादि । वत्सोऽस्या

---

१ भट्टिणीए...जदि अमुं...प्पकासइस्सम्. २ कहिस्सम्. ३ पडि-णि-वुत्तन्तीए-णिक्कमन्तीए. ४ सह अअं. ५ सहि कधेहि कीदिसो सो आलावो. ६ एदं वसन्तएण भणिदं जह. ७ तदो अइ. ८ फलअदंसणसं०. ९ साअरिअं मम. १० जहापरिहिदं ( यथापरिहितं ); जह पिणद्धं अत्तणो सव्वं मंडणं मह पसादीकिदं ता तेण एव्व देवीपसादलध्धेण अलंकरणेन विर०. ११ पदोसकाले भट्टिणो आ०, भट्टिणो आ०; भट्टिणो सआसं. १२ इह आट्टिदा पाडि०; इह ज्जेव पडिवालेहि. १३ संगमो, ०गमं करिस्सामोत्ति.

मद०—( सरोषम् । ) सुसंगते हतासि खलु त्वं यैवं परिजनवत्सला देवीं वञ्चयसे । ( क )

काञ्चन०—हला त्वमिदानीं कुत्र प्रस्थिता । ( ख )

मद०—अहं खल्वस्वस्थशरीरस्य भर्तुः कुशलवृत्तान्तं ज्ञातुं गता त्वं चिरयसीत्युत्ताम्यन्त्या देव्या तव सकाशं प्रेषितास्मि । ( ग )

काञ्चन०—अतिऋजुकेदानीं सा देवी यैवं प्रत्येति । एष खलु भर्ताऽस्वस्थतामिषेणात्मनो मदनावस्थां प्रच्छादयन्दन्ततोरणवलभ्यां तिष्ठति । तदेहि । एतं वृत्तान्तं भर्त्र्यै निवेदयावः । ( घ )

( इति निष्क्रान्ते । )

प्रवेशकः ।

( ततः प्रविशति मदनावस्थां[1] नाटयन्नुपविष्टो राजा । )

राजा—( निःश्वस्य[2] । )

---

( क ) सुसंगदे[3] हदासि क्खु तुमं जा एव्वं परिअणवच्छलं देविं वञ्चेसि । ( ख ) हला[4] तुमं दाणिं कहिं पत्थिदा । ( ग ) अहं खु अस्सत्थसरीरस्स भट्टिणो कुसल[5]वुत्तन्तं जाणिदुं गदा तुमं चिरअसीति उत्तमन्तीए देवीए[6] तुह सआसं पेसिदम्हि । ( घ ) अदिउज्जुआ[7] दाणिं सा देवी जा एवं पत्तीअदि[8] । एसो क्खु भट्टा अस्सत्थदामिसेण अत्तणो मअणावत्थं पच्छादअन्तो दन्ततोरणवलभीए[9] चिट्ठदि । ता एहि । एदं वुत्तन्तं भट्टिणीए णिवेदम्ह[10] ।

---

अस्तीति वत्सला प्रेमवती । परिजनेषु वत्सला परिजनवत्सला ताम् । हतासि कृतघ्नेत्यर्थः । निन्दाव्यञ्जकमिदम् । वञ्चयसे प्रतारयसि । ' गृधिवञ्च्योः प्रलम्भने ' इत्यात्मनेपदम् । चिरं करोति चिरयति । उत्ताम्यन्त्या चिन्ताव्याकुलचित्तया । अतिशयेन ऋजुका सरला अतिऋजुका । दन्तस्य तोरणं दन्तनिर्मितं बहिर्द्वारं यस्याः सा । ' तोरणोऽस्त्री बहिर्द्वारम् ' इत्यमरः । दन्ततोरणा वलभी सौधोर्ध्ववेश्म तस्मिन् । प्रवेशकलक्षणमुक्तम् । सोत्कण्ठं निःश्वस्येति क्वचित्पाठः । तत्र उत्कण्ठा उत्कलिका तया सहितं यथा तथेति विग्रहः । किं तु निःश्वासेनैवोत्कण्ठा व्यज्यतेऽतो हेयोऽयं पाठः ।

---

१ आसनस्थो–मदनावस्थो रा०. २ सोत्कण्ठं नि०. ३ हदा आसि सुसं० तुमं हदा असि...पिअप्पसादवत्सलं; हदा क्खु तुमं सुसं० जा एव्वं वच्छलां वि भट्टिणीं व०. ४ हला मअणिके; सहि तुमं वि दाणिं कहिं. ५ पवुत्तिं. ६ भट्टिणीए पे०; तुए समीवे. ७ अइ उ० दाणिं; काञ्च०—( विहस्य । ) आदि०. ८ पत्तिआअदि. ९ दन्तव०; भीए उवरि. १० अस्मात्परं—मद०—हला एवं करेम्ह । ता लहुं गच्छम्ह; जं ते रोअदि.

संतापो हृदय स्मरानलकृतः संप्रत्ययं सह्यतां
नास्त्येवोपशमोऽस्य तां प्रति पुनः किं त्वं मुधा ताम्यसि ।
यन्मूढेन मया तदा कथमपि प्राप्तो गृहीत्वा चिरं
विन्यस्तस्त्वयि सान्द्रचन्दनरसस्पर्शो न तस्याः करः ॥ १ ॥

अहो महदाश्चर्यम् ।

मनश्चलं प्रकृत्यैव दुर्लक्ष्यं च तथापि मे ।
कामेनैतत्कथं विद्धं समं सर्वैः शिलीमुखैः ॥ २ ॥

( ऊर्ध्वमवलोक्य । ) भोः कुसुमधन्वन् ।

बाणाः पञ्च मनोभवस्य नियतास्तेषामसंख्यो जनः
प्रायोऽस्मद्विध एव लक्ष्य इति यल्लोके प्रसिद्धिं गतम् ।

---

**संताप इति** । हे हृदय यद् यस्मात्कारणात् तदा कदलीगृहाभ्यासे सागरिकासमागमसमये कथमपि दैवात्ः प्राप्तः । सान्द्रः घनश्चासौ चन्दनरसश्च तस्य इव सुखशीतलः स्पर्शः यस्य स सान्द्रचन्दनरसस्पर्शः तस्याः करः । गृहीत्वा करेण धृत्वेत्यर्थः । मूढेन अकार्यज्ञेन मया त्वयि चिरं बहुकालं न निहितः स्थापितः । तत् तस्माद् [ अध्याहार्यमेतत् ] संप्रत्यधुना स्मरः कामः अनल इव स्मरानलः तेन कृतः स्मरानलकृतः अयं संतापः दाहः सह्यताम् । अस्य उपशमः शान्तिः नास्ति एव । तां प्रति तस्याः प्राप्तिमुद्दिश्येत्यर्थः । त्वं पुनः मुधा व्यर्थं किं किमर्थं ताम्यसि ग्लायसि । व्यर्थ एव ते ताप इत्यर्थः । अनुप्रासालंकारः । शार्दूलविक्रीडितं वृत्तम् ॥ १ ॥ महदाश्चर्यमेव दर्शयति—**मन इत्यादिना** । मनः अन्तःकरणं प्रकृत्या स्वभावेनैव चलं चञ्चलमस्थिरमित्यर्थः । तदुक्तं भगवद्गीतायां—'असंशयं महाबाहो मनो दुर्निग्रहं चलम्' इति । दुःखेन लक्ष्यते ज्ञायते इति दुर्लक्ष्यं चक्षुरग्राह्यमिति यावत् । च । अणुत्वादिति भावः । तथापि एवं तस्य दुर्वेध्यत्वेऽपि मे एतन्मनः कामेन सर्वैः शिलीमुखैः बाणैः समं तुल्यकालं कथं विद्धम् । प्रथमं वेध एव दुःसाध्यः । तत्रापि न एकेन बाणेन किं तु सर्वैरपि । तत्रापि न यथाकथंचिदवसरं प्राप्य किं तु समकालमित्यहो महदाश्चर्यमिति भावः । अत्र वेधस्य स्थैर्यत्वलक्ष्यत्वरूपहेत्वोरसत्त्वेऽपि वेधस्य कार्यस्य वर्णनाद्विभावनालंकारः । अनुष्टुप् छन्दः ॥ २ ॥ कुसुमधन्वन् कुसुमानि धनुरस्य असौ कुसुमधन्वा तत्संबोधनम् । 'धनुषश्च । वा संज्ञायाम्' इति वानङ् । **बाणा इति** । मनसि भव उत्पत्तिर्यस्य स मनोभवस्तस्य मनोभवस्य कामस्य पञ्च बाणा नियताः नियमितसंख्याकाः । तेषां बाणानाम् । नास्ति संख्या यस्यासौ असंख्यः । अस्माकमिव विधा प्रकारो यस्य सः अस्मद्विधः प्रियाविप्रयुक्तः जनः एव प्रायः बाहुल्येन लक्ष्यः वेध्यः । इति यद् लोके

---

१ ॰शमो हि. २ संप्रति. ३ तथा. ४ ॰त्यादरात्. ५ आश्चर्यं; आ॰ आश्च॰; ॰दाश्चर्यम् । तथा हि. ६ मनः प्रकृत्यैव चलं. ७ अपि च भो भो विषमायुध. ८ लक्ष्यमिति.

दृष्टं तत्त्वयि विप्रतीपमधुना यस्मादसंख्यैरयं
विद्धः कामिजनः शरैरशरणो नीतस्त्वया पञ्चताम् ॥ ३ ॥

( विचिन्त्य । ) न तथाऽहमेवंविधावस्थमात्मानमनुचिन्तयामि यथाऽन्तर्निगूढकोपसंरम्भाया देव्या लोचनगोचरगता तपस्विनीं सागरिकाम् । तथा हि ।

ह्रिया सर्वस्यासौ हरति विदितास्मीति वदनं
द्वयोर्दृष्ट्वालापं कलयति कथामात्मविषयाम् ।
सखीषु स्मेरासु प्रकटयति वैलक्ष्यमधिकं
प्रिया प्रायेणास्ते हृदयनिहितातङ्कविधुरा ॥ ४ ॥

तद्वार्तान्वेषणाय गतः कथं चिरयति वसन्तकः ।

( ततः प्रविशति हृष्टो वसन्तकः । )

विदू०—( सपरितोषम् । ) ही ही भोः । कौशाम्बीराज्यलाभेनापि न तादृशः प्रियवयस्यस्य परितोष आसीद्यादृशोऽद्य मम सकाशात्प्रियवचनं श्रुत्वा भविष्यतीति तर्कयामि । तद्यावद् गत्वा प्रियवयस्यस्य निवेदयिष्यामि । ( परिक्रम्यावलोक्य च । ) कथमेष प्रियवयस्य इमामेव दिशमवलोकयंस्तिष्ठति । तथा तर्कयामि मामेव प्रतिपालयतीति । तदुपसर्पा-

प्रासिद्धिं गतं तदधुना त्वयि विप्रतीपं विपरीतं दृष्टम् । तत्र हेतुमाह—यस्माद् असंख्यैः गणनारहितैः शरैः त्वया विद्धः अयं मादृशः कामिजनः कामुकवर्गः अशरणः नास्ति शरणं रक्षिता यस्य तादृशः सन् त्वया पञ्चतां पञ्चसंख्यावत्तां पक्षे पञ्चभूतात्मकताम् । मरणमिति यावत् । नीतः प्रापितः । शार्दूलविक्रीडितं छन्दः ॥ ३ ॥ एवं विधा यस्याः सा एवंविधा तादृशी अवस्था यस्य स एवंविधावस्थः । अन्तः हृदये निगूढः संवृतः कोपस्य संरम्भ आवेशो यस्याः सा तस्याः । तपस्विनीं दीनाम् । ह्रियेति । विदिता अस्मि मम चेष्टितं राज्ञा रहसि संगमादि ज्ञातमिति हेतोः ह्रिया लज्जया असौ सर्वस्य जनस्य । सर्वस्माज्जनादिति यावत् । वदनं हरति व्यावर्तयति । द्वयोः आलापं भाषणं दृष्ट्वा आलपन्तौ द्वौ जनौ दृष्ट्वेत्यर्थः । आत्मविषयामात्मसंबन्धिनीं कथां कलयति । सखीषु स्मेरासु सहासासु अधिकं वैलक्ष्यं लज्जां प्रकटयति । एवं प्रिया प्रायेण बाहुल्येन हृदये निहितः स्थापितः य आतङ्कः भयं पीडा वा । 'आतङ्को भयपीडयोः' इति कोशः । तेन विधुरा व्याकुला आस्ते । शिखरिणी वृत्तम् ॥ ४ ॥

१ यत्तैर०. २ त्वयेमां दशाम्. ३ निःश्वस्य. ४ एवमव०, एतदव०; ०त्मानं चिन्त०. ५ रोष०, ०संभारायाः. ६ देव्या गो०, तामेव तप०. ७ स्याधो नयति, स्याग्रे न०. ८ कथां नात्म०. ९ वैलक्ष्यमिति मे. १० विधुरम्. ११ प्रेषितश्च मया तद्वार्तान्वेषणाय वस० तत्कथं चिरयति. १२ ( प्रविश्य ) वस०. १३ सहर्षम्.

म्येनम् । ( उपसृत्य । ) जयतु जयतु प्रियवयस्यः । भो वयस्य दिष्ट्या वर्धसे समीहिताभ्यधिकया कार्यसिद्ध्या । ( क )

राजा—( सहर्षम् । ) वयस्य अपि कुशलं प्रियायाः ।

विदू०—( सगर्वम् । ) भो अचिरेण स्वयमेव प्रेक्ष्य ज्ञास्यसि । (ख)

राजा—( सपरितोषम् । ) वयस्य दर्शनमपि भविष्यति प्रियायाः ।

विदू०—( साहंकारम् । ) भोः कस्मान्न भविष्यति यस्य ते उपहसित-बृहस्पतिबुद्धिविभवोऽहममात्यः । ( ग )

राजा—( विहस्य । ) न[२] खलु चित्रम् । किं न संभाव्यते त्वयि । तत्कथय । विस्तरतः श्रोतुमिच्छामि ।

विदूषकः—( कर्णे । ) एवमे[३]वम् । ( घ )

राजा—( [४]सहर्षम् । ) साधु वयस्य साधु । इदं ते पारितोषिकम् । ( इति हस्तादपनीय कटकं ददाति । )

विदूषकः—( कटकं परिधाय आत्मानं निर्वर्ण्य । ) भो इमं तावच्छुद्ध-सुवर्णकटकमण्डितहस्तमात्मनो ब्राह्मण्यै गत्वा दर्शयिष्यामि । ( ङ )

---

( क ) ही ही [५]भोः । कोसम्बीरज्जलाहेणावि ण तादिसो पिअवअस्सस्स परितोसो आसि जादिसो अज्ज मम सआसादो पिअवअणं सुणिअ भविस्सदित्ति तक्केमि[६] । ता जाव गदुअ पिअवअस्सस्स णिवेदइस्सम् । कधं एसो पिअवअस्सो इमं जेव दिसं अवलोअन्तो चिट्ठदि । तहा तक्केमि मं एव्व पडिवालेदित्ति । ता उवसप्पामि णम् । जअदु जअदु पिअवअस्सो । भो वअस्स दिट्ठिआ वड्ढसि समीहिदब्भहिआए कज्जसिद्धीए । ( ख ) भो अचिरेण सअं जेव पेक्खिअ जाणिस्ससि । ( ग ) भो कीस ण भविस्सदि जस्स दे उवहसिदबिहप्पइबुद्धिविहवो अहं अमच्चो । ( घ ) एव्वमेवम् । ( ङ ) भो इमं ताव सुद्धसुवण्णकडअमण्डिअहत्थं अत्तणो बम्हणीए गदुअ दंसइस्सम् ।

---

प्रियवचनं अभीष्टसिद्धेः दर्शकं वचनम् । अत्र ही ही भो इत्यारभ्य भविष्यतीति तर्कयामि इत्यन्तेन रत्नावलीप्राप्तिवार्तापि कौशाम्बीराज्यलाभादतिरिच्यते इत्युत्कर्षाभिधानाद् उदाहृतिरिति गर्भसंधेरङ्गम् । समीहिताभ्यधिकया समीहितं सागरिकायाः कुशल-वार्तालाभः तस्मादभ्यधिका सागरिकासमागमसंघटनरूपा सिद्धिः तया । उपहसितः

---

१ ०याः सागरिकायाः. २ वयस्य न खलु किंचिन्न सं० ३ ०मेवं कथयति. ४ सप-रितोषम्. ५ ०भोः ही ही भोः...लम्भेण ण तादिसो ०स्सो सपरितोसो आसी. ६ तक्केमि । मं एव्व पडिपालअन्तो चिट्ठदि । ता उप० । ( उपसृत्य । ) जअदु जअदु भवं समीहिदसहिदाए कज्ज०. ७ ०हिदकज्ज०. ८ ०स्सादि । जस्स पिअवअस्सो दे उव० वो अहं वट्टामि. ९ ताव सअं सोवण्ण० मण्डिअं अत्ताणअं करुअ; भोदु एवं दाव । इमं सुद्धसो०; इदं दाव अणअरअणभूसिदसोवण्णकडअभूसिदं अप्पाणं गदुअ मे बम्ह०.

राजा—( हस्ते गृहीत्वा निवारयन्। ) सखे पश्चाद् दर्शयिष्यसि। ज्ञायतां तावत्किमवशिष्टमह्न इति।

विदूषकः—( विलोक्य। ) भोः प्रेक्षस्व प्रेक्षस्व। एष खलु गुर्वनुरागोत्क्षिप्तहृदयः संध्यावधूदत्तसंकेत इवास्तगिरिशिखरकाननमनुसरति भगवान्सहस्ररश्मिः। ( क )

राजा—( विलोक्य सहर्षम्। ) सखे सम्यगुपलक्षितम्। पर्यवसितमहः। तथा हि।

अध्वानं नैकचक्रः प्रभवति भुवनभ्रान्तिदीर्घं विलङ्घ्य
प्रातः प्राप्तुं रथो मे पुनरिति मनसि न्यस्तचिन्तातिभारः।
संध्यामृष्टावशिष्टस्वकरपरिकरैस्पष्टहेमारपङ्क्ति
व्याकृष्यावस्थितोऽस्तक्षितिभृति नयतीवैष दिक्चक्रमर्कः॥ ५॥

अपि च।

---

( क ) भो पेक्ख पेक्ख। एसो क्खु गुरुआणुराओक्खित्तहिअओ संझावहूदिण्णसंकेदो विअ अत्थगिरिसिहरकाणणं अणुसरदि भअवं सहस्सरस्सी।

---

बृहस्पतेः वाचस्पतेः बुद्धेः विभवो येन। ततोऽप्यधिककुशाग्रबुद्धिः इत्यर्थः। कर्णे एवमेवमिति—अत्र तत्त्वार्थकथनात् मार्गाख्यं गर्भसंधेरङ्गमुक्तम्। शुद्धं यत्सुवर्णं तस्य कटकेन मण्डितः हस्तः तम्। ब्राह्मण्यै स्वपत्न्यै। गुरुश्चासावनुरागश्च तेन उत्क्षिप्तं व्याक्षिप्तं हृदयं यस्य। संध्या एव वधूः तया दत्तः संकेतः अमुकसमये त्वया अमुकस्थल आगन्तव्यमित्येवंरूपः यस्य। अस्तगिरेः शिखरमस्तगिरिशिखरं तत्र यत्काननं तत्। सहस्रं रश्मयः किरणा यस्य स सहस्ररश्मिः सूर्यः। पर्यवसितमवसन्नम्। अध्वानमिति। एकं चक्रं यस्यासौ एकचक्रः मे रथः भुवनभ्रान्तिदीर्घं भुवने भ्रान्तिः भ्रमणं तेन दीर्घमध्वानं विलङ्घ्य पुनः प्रातः प्रातःकाले प्राप्तुम् उदयाचलमिति शेषः। न प्रभवति शक्ष्यति इति मनसि न्यस्तः चिन्ताया अतिभारः येन स न्यस्तचिन्तातिभारः एषः अर्कः सूर्यः अस्तक्षितिभृति अस्ताचले अवस्थितः सन्। संध्यया आमृष्टा विलुप्ताः तेभ्योऽवशिष्टो यः स्वकिरणानां परिकरः समूहः स एव स्पष्टा प्रकटं भासमाना हेमारपङ्क्तिः हेम्नः अराणां नेम्यवष्टम्भकदण्डानां पङ्क्तिः यस्य तत्। दिक्चक्रमाकृष्य द्वितीयचक्रस्थाने योजयितुमिति शेषः। नयति इव। उत्प्रेक्षालंकारः।

---

१ ( विधूत्य ) सखे. २ पुनः. ३ अवसितमहः. ४ विदू०—किं ण पेक्खदि भवं; जं पिअवअस्सो-भट्टा-आणवेदि. ५ परिक्रम्यावः० च सहर्षम्. ६ राजा—अये पर्य०. ७ कृष्टा०. ८ स्पृष्ट; करैः स्प०; ०पंक्तिः. ९ वारुणीव०. १० गिरिकाण०; गिरिकुहरकां० अहिस०.

यातोऽस्मि पद्मनयने समयो ममैषं
सुप्ता मयैव भवती प्रतिबोधनीया ।
प्रत्यायनामयमितीव सरोरुहिण्याः
सूर्योऽस्तमस्तकनिविष्टकरः करोति ॥ ६ ॥

तँदुत्तिष्ठ । माधवीलतामण्डपं गत्वा प्रिँयतमासंकेतावसरं प्रतिपालयावः ।

विदूषकः—भोः शोभनं भणितम् । ( इत्युत्तिष्ठैतः । ) ( क )

विदूषकः—( विलोक्य । ) भो वयस्य प्रेक्षस्व प्रेक्षस्व । एष खलु बहलीकृतविरलवनराजिसंनिवेशो गृहीतघनपङ्कपीवरवनवराहमहिषकृष्ण-च्छविः प्रसरति पूर्वदिशं प्रच्छादयंस्तिमिरसंघातः । ( ख )

---

( क ) भो सोहँणं भणिदं । ( ख ) भो वअस्स पेक्ख पेक्ख । एसो क्खु बहली-किदविरलवणराइसंनिवेसो गँहीदघणपङ्कपीवरवणवराहमहिसकिसिणच्छवी पसरदि पूव्व-दिसं पच्छादअन्तो तिमिरसंघाओ ।

---

स्रग्धरा वृत्तम् ॥ ५ ॥ यातोऽस्मीति । हे पद्मनयने पद्मं नयनं यस्यास्तत्संबुद्धिः । यातोस्मि गतोस्मि । एष मम समयः नियतः अस्तस्य कालः एष सुप्तेत्यादिना वक्ष्यमाणः मम समयः संकेतः इत्यपि ध्वनिः । मयि गतेपि न चिरविरहचिन्ता कार्या इत्याह—सुप्ता । कमलनयननिमीलनात् तथोक्तिः । भवती मयैव प्रतिबोधनीया विकासयितव्या सान्त्वयितव्या च । इति उक्तप्रकारेण अस्तमस्तकनिविष्टकरः अस्त-मस्तके निविष्टाः कराः किरणा यस्य स तथोक्तः । पक्षे अस्तं शोकादधोनिहितं यन्मस्तकं शिरः अर्थान्नायिकायाः तत्र निविष्टः सान्त्वनार्थे निहितः करो हस्तो यस्य । सुवति कर्मणि लोकं प्रेरयति इति सूर्यः । 'राजसूयसूर्य'—इत्यादिना निपातनात्क्यप् रुडागमश्च । सरोरुहिण्याः नायिकायाः प्रत्यायनां विश्वासोत्पादनं करोतीव । अत्रे-दमपि अर्थान्तरं प्रतीयते-हे पद्मनयने कमलनेत्रे अधुना यातोस्मि यतोयं मम गमन-कालः । सुप्ता भवती संकेतं पालयता मयैवागत्य प्रतिबोधनीया जागरयितव्या । इति सूरिषु बुधेषु साधुः सूर्यः कश्चिन्नायकः सरोरुहं लीलार्थमलंकारार्थं वा कमलमस्या विद्यते इति सरोरुहिणी । तादृश्या नायिकायाः । शेषं समानम् । श्लेषाश्रया समासोक्ति-रुत्प्रेक्षा च तयोः संकरः । वसन्ततिलका वृत्तम् ॥ ६ ॥ प्रियासंकेतावसरं प्रियागमनं यावदित्यर्थः । न बहलः अबहलः अबहलः बहलः घनः संपद्यमानः कृतः बहलीकृतः । बहलीकृतः स्थगितान्तरालः कृत इत्यर्थः विरलः वनराजीनां संनिवेशः संस्थानं येन स तथोक्तः । गृहीतः घनः बहलः पङ्कः कर्दमः यैः ते गृहीतघनपङ्काः । पीवराः स्थूला वनवासिनः वराहाश्च महिषाश्च वनवराहमहिषाः । शाकपार्थिवादिः । गृहीतघन-

---

१ वदने. २ ममैव. ३ वयस्य तदु॰; ॰त्तिष्ठ तत्रैव ॰मण्डपे. ४ प्रियासंकेतसमयं ५ ॰ष्ठति. ६ भो सोहणं भणासि. ७ तक्खणगाहिद...वनमहिस...विसणिद्धो ( स्निग्धो ) ओदरादि पुरत्थिमि॰ ( अवतरति पुरस्ति॰ ).

राजा—( समन्ताद्विलोक्य । ) सखे साधु दृष्टम् । तथा हि ।

पुरः पूर्वामेव स्थगयति ततोऽन्यामपि दिशं
क्रमात्क्रामन्नद्रिद्रुमपुरविभागांस्तिरयति ।
उपेतः पीनत्वं तदनु भुवनस्येक्षणफलं
तमःसंघातोऽयं हरति हरकण्ठद्युतिहरः ॥ ७ ॥

तदादेशय मार्गम् ।

विदू०—एत्वेतु प्रियवयस्यः । ( क )

( परिक्रामतः । )

विदू०—( निरूप्य । ) भो वयस्य एतत्खलु समासन्नं संसक्तबहल-पत्रपादपलताभिः पिण्डीकृतान्धकारमिव मकरन्दोद्यानम् । तत्कथमत्र मार्गो लक्ष्यते । ( ख )

राजा—( गन्धमाघ्राय । ) वयस्य गच्छाग्रतः । ननु सुपरिज्ञात एवात्र मार्गः । तथा हि ।

पालीयं चम्पकानां नियतमयमसौ सुन्दरः सिन्दुवारः
सान्द्रा वीथी तथेयं बकुलविटपिनां पाटलापङ्क्तिरेषा ।

---

( क ) एदु एदु पिअवअस्सो । ( ख ) भो वअस्स एदं क्खु समासण्णं संसत्त-बहलपत्तपादवलदाहिं पिण्डीकिदान्धआरं विअ मअरन्दुज्जाणम् । ता कहं एत्थ मग्गो लक्खीअदि ।

---

पङ्काश्च ते पीवरवनवराहमहिषाश्च तेषामिव कृष्णा छविः कान्तिर्यस्य । पुर इति । अयं पुरो दृश्यमानः हरकण्ठद्युतिहरः हरस्य कण्ठः तस्य द्युतिः कान्तिः तां हरति अनुकरोतीति तथोक्तः । कृष्णवर्ण इत्यर्थः । तमःसंघातः पुरः प्रथमं पूर्वामेव दिशं स्थगयति । क्रामन् क्रमादद्रीणां द्रुमाणां पुराणां च विभागान् भिन्नानवयवान् तिरयति आच्छादयति । तदनु तत्पश्चात् पीनत्वं घनतामित्यर्थः उपेतः भुवनस्य लक्षणया तद्वर्तिलोकस्य ईक्षणानां लोचनानां फलं पदार्थावलोकनरूपं हरति विलुम्पति । स्वभावोक्तिः । शिखरिणी वृत्तम् ॥ ७ ॥ समासन्नं समीपस्थितम् । संसक्तानि अन्योन्यानुविद्धानि बहलानि पत्राणि यासां ताः पादपाश्च लताश्च ताभिः । पिण्डीकृतः पुञ्जकृतः । पालीयमिति । नियतमियं चम्पकानां पाली श्रेणिः । अयमसौ सुविज्ञातः सुन्दरः सिन्दुवारः निर्गुण्डीवृक्षः । तथा इयं बकुलविटपिणां केसरवृक्षाणां सान्द्रा निविडा वीथी

---

१ सहर्षं सम०. २ वयस्य सम्यग्दृ०, सम्यगुपलक्षितम्. ३ पुरा. ४ ततोऽप्यापि विशदः–विदिशः. ५ विभागं. ६ च जनस्येक्षणपथं. ७ तदेह्यग्रतरावः. ८ वयस्य सुविज्ञातमेतत् । पश्य. ९ सुपरिचितः. १० आलीयं. ११ चन्दनानां सुरभिरयमसौ. १२ सिन्दुरः. १३ भत्तं. १४ बहलपादवदाए ( बहलपादपतया ).

आघ्रायाघ्राय गन्धं विविधमधिगतैः पादपैरेवमस्मि-
न्व्यक्तिं पन्थाः प्रयाति द्विगुणतरतमोनिह्नुतोऽप्येष चिह्नैः ८

( इति परिक्रामतः । )

विदू०—भो एतं खलु निपतन्मत्तमधुकरं कुसुमामोदवासितदशदिशं मसृणमरकतमणिशिलाकुट्टिमसुखायमानचरणसंचारसूचितं तमेव माधवीलतामण्डपं संप्राप्तौ स्वः । तदिहैव तिष्ठतु भवान् यावदहं देवीवेषधारिणीं सागरिकां गृहीत्वा लघ्वागच्छामि । ( क )

राजा—वयस्य तेन हि त्वर्यतां त्वर्यताम् ।

विदू०—भोः मोत्ताम्य । एष आगतोऽस्मि । ( इति निष्क्रान्तः । ) ( ख )

राजा—यावदहमप्यस्यां मरकतशिलावेदिकायामुपविश्य प्रियायाः संकेतसमयं प्रतिपालयामि । ( उपविश्य सचिन्तम् । ) अहो कोऽपि कामिजनस्य स्वगृहिणीसमागमपरिभाविनो जनमभिनवं प्रति पक्षपातः । तथा हि ।

---

( क ) भो एदं क्खु णिविडन्तमत्तमहुअरं कुसुमामोदवासिददसदिसं मसिणमरअदमणिसिलाकुट्टिमसुहाअन्तचलणसंचारसूचिदं तं एव्व माहवीलदामण्डपं संपत्तम्ह । ता इह ज्जेव्व चिट्ठदु भवं जाव अहं देवीवेसधारिणं साअरिअं गेण्हिअ लहुं आअच्छामि । ( ख ) भो मा उत्तम्म । एस आगदोम्हि ।

---

आवलिः । एषा पाटलानां पाटलीनां पङ्क्तिः । अस्मिन्नुद्याने अतिशयेन द्विगुणं द्विगुणतरं तच्च तत्तमश्च तेन निह्नुतः तिरस्कृतः अपि एष मार्गः । एवं विशिष्टा विधाः प्रकारा यस्य स विविधः तं विविधं गन्धमाघ्रायाघ्राय अधिगतैः ज्ञातैः पादपैः चिह्नैः व्यक्तिं प्रयाति स्फुटो भवति । स्रग्धरा वृत्तम् ॥८॥ निपतन्तः मधुकरा यस्मिन् । कुसुमानामामोदः अतिमनोहरः गन्धस्तेन वासिताः । सुरभीकृता इत्यर्थः । दश दिशो येन तत् । मसृणा याः मरकतमणीनां शिलाः तासां कुट्टिमं निबद्धभूमिः तास्मिन् सुखं वेदयते अनुभवतीति सुखायमानः । 'सुखादिभ्यः कर्तृवेदनायाम्' इति क्यङ् । यः चरणसंचारः। संचारकवेद्यसुखस्य संचारे उपचारः । तेन सूचितम् । देव्या वेशमवश्यं धरतीति देवीवेषधारिणी । धृधातोः ' आवश्यकाधमर्ण्ययोर्णिनिः ' इति णिनिः । उपपदसमासः । भूयान् कामोस्य इति कामी । भूम्नि इनिप्रत्ययः । कोपि अनिर्वचनीयः । स्वस्य स्वा वा गृहिणी तया तस्या वा समागमः तं परिभवतीति तस्य । ताच्छील्ये णिनिः ।

---

१ रेव य०. २ तो ह्येष. ३ संकेतं. ४ किमपि. ५ समागमं परित्यज्य. ६ ०अरबहुल-बकुल-कुसुम-वासिददिसामुहं. ७ चिठ तुमं जाव अहं पि-देवीए.

प्रणयविशदां दृष्टिं वक्त्रे ददाति न शङ्किता
घटयति घनं कण्ठाश्लेषे रसान्न पयोधरौ ।
वदति बहुशो गच्छामीति प्रयत्नधृताऽप्यहो
रमयतितरां संकेतस्था तथापि हि कामिनी ॥ ९ ॥

अये कथं चिरयति वसन्तकः । तत् किं नु खलु विदितः स्यादयं वृत्तान्तो देव्याः ।

( ततः प्रविशति वासवदत्ता काञ्चनमाला च । )

वासव०—हञ्जे काञ्चनमाले सत्यमेव मम वेषं कृत्वा सागरिकाऽऽर्यपुत्रमभिसरिष्यति । ( क )

काञ्चन०—कथमन्यथा भट्टिन्यै निवेद्यते । अथ वा चित्रशालिकाद्वारे स्थितो वसन्तक एव ते प्रत्ययमुत्पादयिष्यति । ( ख ).

वासव०—तेन हि तत्रैव गच्छावः । ( ग )

काञ्चन०—एत्वेतु भट्टिनी । ( घ )

( उभे परिक्रामतः । )

---

( क ) हञ्जे काञ्चणमाले सच्चं जेव्व मम वेसं कदुअ साअरिआ उज्जउत्तं अहिसरिस्सदि । ( ख ) कधं अण्णधा भट्टिणीए णिवेदीअदि । अध वा चित्तसालिआदुआरे ट्ठिदो वसन्तओ जेव्व दे पच्चअं उप्पादइस्सदि । ( ग ) तेण हि तहिं जेव गच्छम्ह । ( घ ) एदु एदु भट्टिणी ।

---

अभिनवं जनं नवस्त्रीरूपम् । पक्षपातः गाढाभिलाष इति यावत् । प्रणयविशदामिति । संकेते संकेतस्थाने तिष्ठतीति संकेतस्था कामिनी कामवती नायिका । परेण विदिता स्यां कोपि मां पश्यति किमिति वा शङ्का जाता अस्याः सा शङ्किता सती प्रणयविशदां प्रणयेन प्रेम्णा विशदां प्रसन्नां दृष्टिं न ददाति । विश्रब्धं न पश्यतीत्यर्थः । कण्ठाश्लेषे आलिङ्गनविधौ रसात्प्रीत्या स्तनौ घनं दृढं न घटयति । स्तनोपपीडं नालिङ्गतीत्यर्थः । प्रयत्नेन धृता प्रयत्नधृता अपि गच्छामीति बहुशः वदति । तथापि एवमरतिहेतुषु सत्स्वपि । अहो इत्याश्चर्ये । रमयतितरां हि नायकमतिशयेन रमयत्येव । अत्र कारणाभावेऽप्यतिशयरमणरूपकार्यस्य वर्णनाद्विभावनालंकारः । हरिणी वृत्तम् ॥ ९ ॥ किं नु खल्विति वितर्के । अन्यथा अलीकमित्यर्थः । प्रत्ययं विश्वासम् ।

---

१ तद्वार्तान्वेषणाय गतः कथं. २ न खलु. ३ देव्या वासवदत्तया; देव्याः. ४ ०सरदि. ५ ०धा वा. ६ देवीए. ७ उवट्ठिदो, संणिहिदो.

( ततः प्रविशति कृतावगुण्ठनो वसन्तकः । )

वसन्तकः—( कर्णं दत्त्वा । ) यथा चित्रशालिकाद्वारे पदशब्दः श्रूयते तथा तर्कयाम्यागता सागरिकेति । ( क )

काञ्चन०—भट्टिनि इयं सा चित्रशालिका । तद्यावद्वसन्तकस्य संज्ञां करोमि । ( इति छोटिकां ददाति । ) ( ख )

विदू०—( सहर्षमुपसृत्य सस्मितम् । ) सुसंगते सुष्ठु खलु कृतस्त्वयैष काञ्चनमालाया वेषः । अथ सागरिकेदानीं कुत्र । ( ग )

काञ्चन०—( अङ्गुल्या दर्शयन्ती । ) नन्वेषा । ( घ )

विदू०—( दृष्ट्वा सविस्मयम् । ) एषा स्फुटमेव देवी वासवदत्ता । ( ङ )

वासव०—( साशङ्कमात्मगतम् । ) कथं ज्ञातास्मि । ( च )

विदू०—( छोटिकां ददाति । ) भवति सागरिके इत आगच्छ । ( वासवदत्ता विहस्य काञ्चनमालामवलोकयति । ) ( छ )

काञ्चन०—( अपवार्य अङ्गुल्या तर्जयन्ती । ) हताश स्मरिष्यस्येतदात्मनो वचनम् । ( ज )

विदू०—त्वरतां त्वरतां सागरिका । एष खलु पूर्वदिश उद्गच्छति भगवान्मृगलाञ्छनः । ( परिक्रामति । ) ( झ )

---

( क ) जधा चित्तसालिआदुआरे पदसद्दो सुणीअदि तधा तक्केमि आगदा साअरिअत्ति । ( ख ) भट्टिणि इअं सा चित्तसालिआ । ता जाव वसन्तअस्स सण्णं करेमि । ( ग ) सुसंगदे सुट्ठु क्खु किदो तुए एसो कञ्चणमालाए वेसो । अध साअरिआ दाणिं कहिं । ( घ ) णं एसा । ( ङ ) एसा फुडं एव्व देवी वासवदत्ता । ( च ) कधं जाणिदम्हि । ( छ ) भोदि साअरिए इदो आअच्छ । ( ज ) हदास सुमरिस्ससि एदं अत्तणो वअणम् । ( झ ) तुरअदु तुअरदु साअरिआ । एसो क्खु पुव्वदिसादो उग्गच्छदि भअवं मिअलञ्छणो ।

---

कृतावगुण्ठनः कृतमवगुण्ठनं मुखावेष्टनं येन स तथा । अत्र वासवदत्ताकाञ्चनमालाभ्यां सागरिकासुसंगतावेषाभ्यां राजविदूषकयोरभिसंधीयमानत्वादधियलमिति गर्भसंधेरङ्गम् । तर्जयन्ती भर्त्सयमाना । मृगः लाञ्छनं यस्य स मृगलाञ्छनः चन्द्रः ।

---

१ उपविष्टः कृता०. २ निदर्शयति. ३ ससंभ्रममा०–मपचार्य. ४ पश्यति. ५ विदूषकं त०. ६ सर्वे परिक्रामन्ति. ७ पडिसद्दो ( प्रतिश० ). ८ देमि. ९ एसा सा. १० इअं... देवी. ११ पच्चभिण्णादम्हि एदेण ( प्रत्यभिज्ञातास्म्येतेन )। ता गमिस्सम् । ( इति गन्तुमिच्छति । ). १२ इदो इदो; एहि एहि. १३ सुमरेसि. १४ भोदी सा०. १५ अस्मात्परं—( ससंभ्रममपवार्य–ससाध्वसम् ) भअवं मिअलञ्छण णमो दे । मुहुत्तअं दाव ओवारिदसरीरो ( अपवारितशरीरः ) होहि जेण पेक्खामि से भावाणुबन्धम् इत्य० क्वचित्.

राजा—अये उपस्थितप्रियासमागमस्यापि किमिदमत्यर्थमुत्ताम्यति मे चेतः । अथ वा ।

तीव्रः स्मरसंतापो न तथादौ बाधते यथासन्ने ।
तपति प्रावृषि नितरामभ्यर्णजलागमो दिवसः ॥ १० ॥

विदू०—( कर्णे दत्त्वा । ) भवति सागरिके एष खलु प्रियवयस्यस्त्वामेवोद्दिश्योत्कण्ठानिर्भरं मन्त्रयते । तन्निवेदयाम्यस्मै तवागमनम् । ( क )

वासव०—( शिरःसंज्ञां ददाति । )

विदू०—( राजानमुपसृत्य । ) भो वयस्य दिष्ट्या वर्धसे । एषा खलु मयानीता सागरिका । ( ख )

राजा—( सहर्षं सहसोत्थाय । ) वयस्य क्वासौ क्वासौ ।

विदूषकः—नन्वेषा । ( ग )

राजा—( उपसृत्य । ) प्रिये सागरिके ।

शीतांशुर्मुखमुत्पले तव दृशौ पद्मानुकारौ करौ
रम्भागर्भनिभं तथोरुयुगलं बाहू मृणालोपमौ ।
इत्याह्लादकराखिलाङ्गि रभसान्निःशङ्कमालिङ्ग्य मा-
मङ्गानि त्वमनङ्गतापविधुराण्येह्येहि निर्वापय ॥ ११ ॥

---

( क ) भोदि साअरिए एसो खु पिअवअस्सो तुमं ज्जेव उद्दिसिअ उक्कण्ठाणिब्भरं मन्तेदि । ता णिवेदेमि से तुहागमणम् । ( ख ) भो वअस्स दिट्ठिआ वड्ढसि । एसा क्खु मए आणीदा साअरिआ । ( ग ) णं एसा ।

---

उपस्थितः आसन्नः प्रियासमागमः यस्य । तीव्र इति । तीव्रः कठोरः स्मरस्य संतापः कामकृतो दाहः आदौ प्रियादर्शने जाते तथा न बाधते यथा आसन्ने प्रियासमागमे बाधते । तत्र दृष्टान्तमाह—प्रावृषि वर्षासु अभ्यर्णजलागमः अभ्यर्णः समीपः जलागमः वृष्टिरिति यावत् यस्मिन् तादृशः दिवसः नितरां तपति । न तु प्रावृडारम्भदिवसस्तथा । दृष्टान्तालंकारः । आर्या ॥ १० ॥ उत्कण्ठानिर्भरं उत्कण्ठा सस्पृहं चिन्तनं सा निर्भरा यस्मिन्कर्मणि तद्यथा तथा । अत्र 'राजा-अये उपनतप्रियासमागमस्य' इत्यत आरभ्य 'निवेदयामि तवागमनम्' इत्यन्तेन वत्सराजस्य सागरिकासमागममभिलषतः एव भ्रान्तसागरिकाप्राप्तिरिति क्रमो नाम गर्भसंधेरङ्गमुक्तम् । प्रिये सागरिके । शीतांशुरिति । तव मुखं शीतांशुः हिमकिरणः चन्द्रः तद्वत्तापहरणादाह्लाद-

---

१ ( सोत्कण्ठमात्मगतम् । ) उप०. २ संगमोत्सुकोऽपि. ३ अकारणम्. ४ उत्तपति. ५ मनः. ६ अथ वा साधुरयं जनापवादः—प्रवादः. ७ तथासौ. ८ प्राप्तः, ०सन्नः. ९ सुतरां. १० आकर्ण्य. ११ शिरश्चालयति. १२ उपसर्पन्. १३ ०गमणम् । ( सहसोपसृत्य । ) भो एसा आअदा साअरिआ.

वासव०—( सखाष्पमपवार्य । ) काञ्चनमाले एवमपि मन्त्रयित्वार्यपुत्रः पुनरपि मामालपिष्यतीत्यहो आश्चर्यम् । ( क )

काञ्च०—( अपवार्य । ) भर्त्रि एवं न्विदम् । किं पुनः साहसिकानां पुरुषाणां न संभाव्यते । ( ख )

विदूषकः—भवति सागरिके विश्रब्धा भूत्वा प्रियवयस्यमालप । अद्यापि तावदस्य नित्यरुष्टाया देव्या वासवदत्ताया दुष्टवचनैः कटुकिते श्रोत्रे सांप्रतं सुखयतु तव मधुरवचनोपन्यासः । ( ग )

वासव०—( अपवार्य सरोपस्मितम् । ) काञ्चनमाले अहमीदृशी कटुभाषिणी । आर्यवसन्तकः पुनः प्रियंवदः । ( घ )

---

( क ) कञ्चणमाले एव्वं पि मन्तिअ अज्जउत्तो पुणो वि मं आलविस्सदित्ति अहो अच्चरिअं । ( ख ) भट्टिणि एव्वं ण्णेदम् । किं उण साहसिआणं पुरुसाणं ण संभावीअदि । ( गं ) भोदि साअरिए वीसद्धा भविअ पिअवअस्सं आलवेहि । अज्जवि दाव से णिच्चरुट्ठाए देवीए वासवदत्ताए दुट्ठवअणेहिं कडुइदाइं सोत्ताइं संपदं सुहावेदु तुह महुरवअणोवण्णासो । ( घ ) कञ्चणमाले अहं ईदिसी कडुअभासिणी । अज्जवसन्तओ उण पिअंवदो ।

---

करमित्यर्थः । एवं शीतलस्पर्शत्वादाह्लादकरत्वं सर्वत्रोन्नेयम् । तवेति सर्वत्र संबध्यते । तव दृशौ नयने उत्पले कुवलये । करौ पद्ममनुकुरुत इति पद्मानुकारौ । कर्मण्यण् । तथा ऊरुयुगलं सक्थियुग्मं रम्भायाः कदल्याः गर्भः रम्भागर्भः अपहृतबहिरावरणः रम्भाकाण्डः तेन निभं तुल्यम् । बाहू मृणालं बिसं उपमा ययोः ते तथा । यद्वा मृणालेन सदृशौ मृणालोपमौ । इति एवं प्रकारेण हे आह्लादकराखिलाङ्गि आह्लादकराणि आनन्दनानि अखिलानि अङ्गानि यस्यास्तथाविधे । एह्येहि । संभ्रमार्थो द्विरुक्तिः । रभसाद्वेगान्मां निर्गता शङ्का यस्मात्तन्निःशङ्कं यथा तथा आलिङ्ग्य त्वमनङ्गः कामस्तस्य यस्तापस्तेन विधुराणि विवशानि मे अङ्गानि निर्वापय सुखय । रूपकमुपमा चालंकारौ । शार्दूलविक्रीडितं वृत्तम् ॥ ११ ॥ ' अत्र राजा—(उपसृत्य) प्रिये ' इत्यादिना ' इह तदप्यस्त्येव बिम्बाधरे ' इत्यन्तेन येषां मते भावज्ञानं क्रमस्तन्मतेन वासवदत्तया वत्सराजभावस्य ज्ञातत्वात्क्रम इत्यङ्गमुक्तम् । कथं अन्यसंक्रान्तप्रेमा सन्नित्यर्थः । सहसा वर्तन्त इति साहसिकाः । ' ओजःसहोम्भसा वर्तते ' इति ठक् । साहसमत्र नायिका-

---

१ एव्वं सअं मन्तेदि अज्ज०...वि मं कहं आलविस्सदि. २ रिए वासवदत्तावअणेहिं कडुइकिदा कण्णा सुहावीअन्तु तव वअणेहिं. ३ मउ ( मृदु ) महुर०. ४ ईदिसी । वसन्त०,

काञ्च०—( अपवार्य[1]। ) हताश स्मरिष्यस्येतद्वचनम् । ( क )

विदू०—( विलोक्य । ) भो वयस्य प्रेक्षस्व प्रेक्षस्व । एष खलु कुपित-कामिनीकपोलसंनिभः पूर्वदिशं प्रकाशयन्नुदितो भगवान्मृगलाञ्छनः । ( ख )

राजा—प्रिये[2] सागरिके पश्य ।

आरुह्य[3] शैलशिखरं त्वद्वदनापहृतकान्तिसर्वस्वः ।
प्रतिकर्तुमिवोर्ध्वकरः[4] स्थितः पुरस्तान्निशानाथः ॥ १२ ॥

अपि[5] च । दर्शितमनेनोद्गच्छता प्रकृतिजडत्वम् । कुतः ।

किं पद्मस्य रुचं[6] न हन्ति नयनानन्दं विधत्ते न किं
वृद्धिं वा झषकेतनस्य कुरुते नालोकमात्रेण किम् ।
वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरभ्युद्गतो[7]
दर्पः स्यादमृतेन चेदिह[8] तदप्येवास्ति बिम्बाधरे ॥ १३ ॥

( क ) हदास सुमरिस्ससि एदं वअणम् । ( ख ) भो वअस्स पेक्ख पेक्ख । एसो क्खु कुविदकामिणीकवोलसण्णिहो[9] पुव्वदिसं पआसअन्तो उदिदो भअवं मिअलञ्छणो ।

न्तरानुरागप्रवृत्तिः । साहसिकैः सर्वमुचितमनुचितं क्रियते इति भावः । विश्रब्धा वीत-शङ्का । कटुकिते कटुत्व कटुकं तत्संजातमनयोरिति । यद्वा कटुके कृते । णिच् कर्मणि क्तः । मधुराणि च तानि वचनानि च तेषामुपन्यासः प्रस्तावनम् । कुपितकामिनीकपोलसंनिभः कुपिता क्रुद्धा चासौ कामिनी च तस्याः कपोलस्तत्संनिभस्तत्तुल्यः । आरक्तवर्ण इत्यर्थः । **आरुह्येति** । तव वदनं त्वद्वदनं तेनापहृतं कान्तिरेव सर्वस्वं यस्य स त्वद्वदनाप-हृतकान्तिसर्वस्वः निशानाथः चन्द्रः शैलशिखरमारुह्य ऊर्ध्वकरः ऊर्ध्वं करौ यस्य । पक्षे कराः किरणा यस्य । स तथोक्तः । प्रतिकर्तुमिव त्वन्मुखकृतकान्तिस्तेयरूपापराधस्य प्रतिक्रियार्थं पुरस्तात्पुरतः पक्षे पूर्वस्यां दिशि स्थितः । श्लेषाश्रयोपमालंकारः । समासो-क्तिरपि ॥ १२ ॥ जडत्वं बुद्धिमान्द्यं विचाररहित्यमिति यावत् । तदेव विशदयति—**किं पद्मस्येत्यादिना** । अयं तव वक्त्रेन्दुः मुखचन्द्रः पद्मस्य रुचं कान्तिं न हन्ति प्रत्यादिशति किमिति काकुः । अपि तु प्रत्यादिशत्येव । प्रेक्षितुर्नयनानन्दं न विधत्ते करोति किम् । अपि तु विधत्ते एव । वा अथ वा आलोकमात्रेण आलोकः दर्शनं स एव आलोक-मात्रस्तेन । झषः मीनः केतनं यस्य स झषकेतनः कामः पक्षे समुद्रो वा तस्य वृद्धिं न करोति किम् । अपि तु करोत्येव । यद् यस्मात्कारणादयं शीतांशुः उक्तकार्यकरण-समर्थे तव वक्त्रेन्दौ सति विद्यमाने अभ्युद्यतः । अतः जडोऽयमिति भावः । अथ ब्रूयान्मयावश्यमुदेतव्यं यतोऽहममृतमयो न च मत्कार्यं वक्त्रेन्दुः कुर्यादिति तदपि

१ अपवार्याङ्गुल्या तर्जयन्ती. २ प्रिये पश्य. ३ उदयाद्रिस्थित—उदयोर्वीभृत—एषः. ४ फूत्कर्तुमिव. ५ ननु प्रिये—दर्शित०, किं न दर्शि०...अनेन जडत्वं; उद्यता जडत्वं प्रकटितमनेन. ६ रुचिं. ७ अभ्युद्यतः; उज्जृम्भते. ८ वै तदखिलं नन्वास्ति; तवाप्यस्त्येव. ९ कवोलसप्पभो ( सप्रभः ) सव्वं ज्जेव; ०सदिसो सव्वं ज्जेव्व दिसं पच्छाअअन्तो-पआसीकरन्तो; उदिदो—उट्ठिदो.

वासव०—(सरोषमवगुण्ठनमपनीय।) आर्यपुत्र सत्यमेवाहं सागरिका। त्वं पुनः सागरिकोत्क्षिप्तहृदयः सर्वमेव सागरिकामयं प्रेक्षसे। (क)

राजा—(सवैलक्ष्यमपवार्य।) कथं देवी वासवदत्ता। वयस्य किमेतत्।

विदू०—(सविषादम्।) भो वयस्य किमपरम्। अस्माकं जीवितसंशयो जात एषः। (ख)

राजा—(उपविश्याञ्जलिं बद्ध्वा।) प्रिये वासवदत्ते प्रसीद प्रसीद।

वासव०—(तन्मुखाभिमुखं हस्तौ प्रसार्याश्रूणि विधारयन्ती।) आर्यपुत्र मैवं भण। अन्यगतानीमान्यक्षराणि। (ग)

विदू०—(आत्मगतम्।) किमिदानीमत्र करिष्यामि। भवतु। एवं तावत्। (प्रकाशम्।) भवति महानुभावा खलु त्वम्। तत्क्षम्यतां तावदेकोऽपराधः प्रियवयस्यस्य। (घ)

वासव०—आर्य वसन्तक ननु प्रथमसंगमे विघ्नं कुर्वत्या मयैवैतस्यापराद्धम्। (ङ)

---

(क) अज्जउत्त सच्चं एव्व अहं साअरिआ। तुमं उण सौअरिओक्खित्तहिअओ सव्वं एव्व साअरिआमअं पेक्खसि। (ख) भो वअस्स किं अवरं। अम्हाणं जीविअसंसओ जादो एसो। (ग) अज्जउत्त मा एव्वं भण। अण्णगदाइ इमाइं अक्खराइं। (घ) किं दाणिं एत्थ करिस्सं। भोदु। एवं दाव। भोदि महाणुभावा क्खु तुमम्। ता क्खमीअदुं दाव एक्को अवराहो पिअवअस्सस्स। (ङ) अज्ज वसन्तअ णं पढमसंगमे विग्घं करन्तीए मए एव्व एदस्स अवरद्धम्।

---

नेत्याह। अमृतेन दर्पः स्यादहमेवामृतं धारयामि इति गर्वः स्याच्चेत्तदपि अस्मिन् बिम्बाधरे बिम्बं बिम्बीफलं तदिव अधरः तस्मिन्नास्त्येव। अतः व्यर्थोऽयमस्योदयः। इति प्रसिद्धस्योपमानस्य तिरस्कारफलकव्यर्थतोक्त्या प्रतीपमलंकारः। शार्दूलविक्रीडितं वृत्तम्॥ १३॥ अस्माकं मम सागरिकायाः सुसंगतायाः च। अन्यगतानि सागरिकागतानि इत्यर्थात्। महानुभावा महाननुभावः पराक्रमो यस्याः सा। अत एव बहुक्षमा। प्रत्यक्षं दृष्टं व्यलीकं अप्रियकरणम्। अपराध इति यावद्। यस्य।

---

१ अस्य स्थाने (१३ श्लोकादनन्तरं)—(विलोक्य वासवदत्ताया मुखं...मुखमुन्नमय्य...दृष्ट्वा सविषादम्।) कथं देवी वास०। वयस्य इ०. २ हा धिक् कष्टम्। कथं. ३ सभयम्. ४ तदभिमुखमश्रूणि निपातयन्ती. ५ आणुरत्त, ०हिअओ भविअ; साअरिआसरिसं. ६ ०सकन्ना क्खु इदाणिं एदे अक्खरा. ७ ०अदु सो अअं...राधो. ८ ०मसंकेअस्स...अवराधं कदं (अपराधः कृतः).

राजा—देवि एवं प्रत्यक्षदृष्टव्यलीकः किं ब्रवीमि । तथापि विज्ञापयामि । ( पादयोः पतति । )

आताम्रतामपनयामि विलक्ष एष
लाक्षाकृतां चरणयोस्तव देवि मूर्ध्ना ।
कोपोपरागजनितां तु मुखेन्दुविम्बे
हर्तुं क्षमो यदि परं करुणा मयि स्यात् ॥ १४ ॥

वासव०—( हस्तेन वारयन्ती । ) आर्यपुत्र उत्तिष्ठोत्तिष्ठ । निर्लज्जः खलु स जनो य आर्यपुत्रस्येदृशं हृदयं ज्ञात्वा पुनरपि कुप्यति । तत्सुखं तिष्ठत्वार्यपुत्रः । गमिष्याम्यहम् । ( इति गन्तुमिच्छति । ) ( क )

काञ्चन०—भर्त्रि कुरु प्रसादम् । एवं चरणपतितं महाराजमुज्झित्वा गताया देव्या अवश्यं पश्चात्तापेन भवितव्यम् । ( ख )

वासव०—अपेहि अपण्डिते कुतोऽत्र प्रसादस्य पश्चात्तापस्य वा कारणम् । तदेहि । गच्छावः । ( ग )

राजा—देवि प्रसीद प्रसीद । ( 'आताम्रतामपनयामि' इत्यादि पुनः पठति । )

---

( क ) अज्जउत्त उट्ठेहि उट्ठेहि । णिल्लज्जो क्खु सो जणो जो अज्जउत्तस्य ईदिसं हिअअं जाणिअ पुणो वि कुप्पदि । तोँ सुहं चिट्ठदु अज्जउत्तो । गमिस्सं अहम् । ( ख ) भट्टिणि करेहि पसादम् । एव्वं चरणपडिदं महाराअं उज्झिअ गदाए देवीए अवस्सं पच्छादावेण होदव्वम् । ( ग ) अवेहि अपण्डिदे कुदो एत्थ पसादस्स पच्चादावस्स वा कारणम् । ता एहि । गच्छम्ह ।

---

आताम्रतामिति । हे देवि विलक्षः स्वाप्रियाचरणेन लज्जितः अहं तव चरणयोः लाक्षया जतुरागेण कृतामाताम्रतामीषद्रक्ततामेष मूर्ध्ना तत्र शिरःसंघर्षणेन अपनयामि । पादपतनेनापराधपरिमार्जनं करोमीति भावः । मुखेन्दुविम्बे मुखमेवेन्दुबिम्बं चन्द्रमण्डलं तत्र कोप एव उपरागः राहुग्रहः तेन जनितां आताम्रतां हर्तुं तु क्षमः स्यां यदि मयि तव परं करुणा स्यात् । वसन्ततिलकं वृत्तम् ॥ १४ ॥ अपण्डिते मूढे । पण्डा बुद्धिः अस्याः संजाता पण्डिता । न पण्डिता अपण्डिता । अत्र विषये

---

१ एवमपि प्रत्यक्षमपि...किं विज्ञा०. २ विवर्णः; एष—एव. ३ गच्छति. ४ ता वीसत्थो ( विश्वस्तः ) मोदु अ०. ५ चलणवन्दिनं...०दावो भविस्सदि. ६ को एत्थ पसादकालो; गदो क्खु पच्चादावस्स कालो.

विदू०—भो उत्तिष्ठ । गता देवी । तत्कस्मादत्रारण्यरुदितं करोषि । ( क )

राजा—( मुखमुन्नमय्य दृष्ट्वा । ) कथमकृत्वैव प्रसादं गता देवी ।

विदू०—कथं न कृतः प्रसादो यदद्याप्यक्षतशरीरौ तिष्ठावः । ( ख )

राजा—धिङ् मूर्ख किमेवं मामुपहससि । ननु त्वत्कृत एवायमापतितोऽस्माकं महाननर्थः । कुतः ।

समारूढा प्रीतिः प्रणयबहुमानादनुदिनं
व्यलीकं वीक्ष्येदं कृतमकृतपूर्वं खलु मया ।
प्रिया मुञ्चत्यद्य स्फुटमसहना जीवितमसौ
प्रकृष्टस्य प्रेम्णः स्खलितमविषह्यं हि भवति ॥ १५ ॥

विदू०—भो रुष्टा देवी किं करिष्यतीति न जानामि । सागरिका पुनर्दुष्करं जीविष्यतीति तर्कयामि । ( ग )

राजा—वयस्य अहमप्येवं चिन्तयामि । हा प्रिये सागरिके ।

( ततः प्रविशति वासवदत्तावेषधारिणी सागरिका । )

साग०—( सोद्वेगम् । ) दिष्ट्या नाहमनेन विरचितदेवीवेषेणास्या-

( क ) भो उठ्ठेहि । गदा देवी । ता कीस एत्थ अरण्णरुदिदं करेसि । ( ख ) कहं ण किदो पसादो जं अज्ज वि अक्खदसरीरा चिठ्ठम्ह । ( ग ) भो रुठ्ठा देवी किं करिस्सदित्ति ण जाणामि । साअरिआ उण दुक्करं जीविस्सदित्ति तक्केमि ।

कर्तव्यमजानति इत्यर्थः । अक्षतमपीडितं शरीरं ययोस्तौ । समारूढेति । प्रणयस्य प्रेम्णः बहुमानादत्याद्दतत्वात्प्रीतिः स्नेहः समारूढा प्रचयं गता । अतः खलु पूर्वं कृतं कृतपूर्वं न कृतपूर्वमकृतपूर्वमिदं व्यलीकं अकार्यमन्यस्त्रीप्रार्थनरूपमद्य मया कृतं वीक्ष्य दृष्ट्वा असहना अमर्षणशीला असौ वासवदत्ता अद्य स्फुटमसंशयं जीवितं मुञ्चति त्यक्ष्यति । हि यस्मात्प्रकृष्टस्य प्रेम्णः अनुरागस्य विषये स्खलितं विपरीतकरणमविषह्यं सोढुमशक्यं भवति । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलंकारः । शिखरिणी वृत्तम् ॥ १५ ॥ 'राजा—धिङ् मूर्ख' इत्यादिना 'सागरिका पुनः दुष्करं जीविष्यतीति तर्कयामि' इत्यन्तेन प्रकृष्टप्रेमस्खलनेन सागरिकानुरागजन्येन वासवदत्ताया मरणास्याभ्यूहनादनुमानं नाम गर्भसंधेः अङ्गम् ।

१ उत्तानीकृत्य. २ किं मामुप-परिह०; कृतं परिहासेन. ३ ०र्थक्रमः, ०र्थफन्दः. ४ ध्रुवम्...महो. ५ एवमेतत्. ६ भो किं पुनः. ७ ०रिआ उण अज्ज दुक्करं जीवदित्ति, ०रिआए उण जीविदं दुक्करंति.

श्चित्रशालिकाया निष्क्रामन्ती केनापि लक्षितास्मि । तदिदानीं किं करिष्यामि । (सास्रं चिन्तयति ।) (क)

विदू०——भोः किं मूढ इव तिष्ठसि । चिन्तयात्र प्रतीकारम् । (ख)

राजा——ननु[2] तमेव चिन्तयामि । वयस्य देवीप्रसादनं मुक्त्वा नान्यमत्रोपायं पश्यामि । तदेहि । तत्रैव[3] गच्छावः ।

(इति परिक्रामतः[4] । )

सागरिका——(विमृश्य ।) वरमिदानीं स्वयमेवात्मानमुद्बध्योपरता न पुनर्ज्ञातसंकेतवृत्तान्तया देव्या परिभूतास्मि । तद्यावदहमशोकपादपं गत्वा यथासमीहितं करिष्यामि । (ग)

विदू०——(आकर्ण्य[5] ।) तिष्ठ तावत् । तिष्ठ भोः । पदशब्दः श्रूयते । जानामि कदापि गृहीतपश्चात्तापा पुनरपि देव्यागता भवेत् । (घ)

राजा——वयस्य महानुभावा खलु देवी । कदाचिदेवमपि स्यात् । तत्त्वरितं निरूप्यताम्[6] ।

विदूषकः——यद्भवानाज्ञापयति । (इति परिक्रामति ।) (ङ)

---

(क) दिट्ठिआ[7] णाहं इमिणा विरइददेवीवेसेण इमादो चित्तसालिआदो णिक्कमन्ती केणावि लक्खिदम्हि । ता इदाणिं किं करिस्सम् । (ख) भोः किं मूढो विअ चिट्ठसि । चिन्तेहि एत्थ पडिआरं । (ग) वरं दाणिं सअं जेव्व अप्पाणं उब्बन्धिअ उवरदा ण उण जाणिदसंकेतवुत्तन्ताए देवीए परिभूदम्हि । ता जाव[9] अहं असोअपादवं गदुअ जहासमीहिदं करिस्सम् । (घ) चिट्ठ दाव । चिट्ठ[10][11] भो । पदसद्दो सुणीअदि । जाणामि[12] कदावि गहिदपच्छादावा पुणोवि देवी आगदा भवे । (ङ) जं भवं आणवेदि ।

---

मूढः प्रतिपत्तिशून्यः । नान्यमत्रोपायं पश्यामि—अत्र अनन्तराङ्कार्थबिन्दुनाऽनेन देवीलक्षणापायस्य प्रसादनेन निवारणान्नियता फलप्राप्तिः सूचिता । सास्रमस्रैः सहितं यथा तथा । उपरता मृता । ज्ञातः संकेतस्य वासवदत्तावेषधारिणी तव समीपमागमिष्यामीत्येवंरूपस्य वृत्तान्तो यया तया । परिभूता अपमानिता । यथासमीहितं

---

१ सास्रा चिन्ति०. २ वयस्य ननु. ३ मूर्ख उत्तिष्ठ. ४ उत्तिष्ठतः. ५ कर्णं दत्त्वा. ६ निरूपय. ७ दिट्ठा (दृष्टा)...भट्टिणीवेसेण अविणीदा केणावि इ० लिआदो णिग्गदा; विरइदेण देवी० संगीदसालादो. ८ जाणीहि दाव को अस्स उवाओत्थि. ९ ०रदा भविस्सं ०देवीए सुसंगदा विअ परि०, विदितसंकेत० सुसंगदाए सह देवीए परिभूदा चिट्ठामि. १० जाव माहवीलदाए पासं विरइअ जहा०, असोअपादवदले ग०. ११ पिट्ठे एसो क्खु पडिसद्दो. १२ तक्केमि...भविस्सदि.

सागरिका—( उपसृत्य । ) तद्यावदेतया माधवीलतायाः पाशं विरचय्याशोकपादप आत्मानमुद्बध्य व्यापादयामि । ( इति लतापाशं रचयन्ती । ) हा तात हा अम्ब एषेदानीमहमनाथाऽशरणा विपद्ये मन्दभागिनी । ( इति कण्ठे लतापाशमर्पयति । ) ( क )

विदूषकः—( विलोक्य । ) का पुनरेषा । कथं देवी वासवदत्ता । ( ससंभ्रममुच्चैः । ) भो वयस्य परित्रायस्व परित्रायस्व । एषा खलु देवी वासवदत्तोद्बध्यात्मानं व्यापादयति । ( ख )

राजा—( ससंभ्रममुपसृत्य । ) क्वासौ क्वासौ ।

विदूषकः—नन्वेषा । ( ग )

राजा—( उपसृत्य कण्ठात्पाशमपनयन् । ) अयि साहसकारिणि किमिदमकार्यं क्रियते ।

मम कण्ठगताः प्राणाः पाशे कण्ठगते तव ।
अतः स्वार्थः प्रयत्नोऽयं त्यज्यतां साहसं प्रिये ॥ १६ ॥

सागरिका—( राजानं दृष्ट्वा । ) अम्मो । कथमेष भर्ता । ( सहर्षमात्मगतम् । ) यत्सत्यमेनं प्रेक्ष्य पुनरपि मे जीविताभिलाषः संवृत्तः । अथ वैनं

---

( क ) ता जाव इमाए माहवीलदाए पासं विरइअ असोअपादवे अप्पाणअं उब्बन्धिअ वावादेमि । हा ताद हा अम्व एसा दाणिं अहं अणाधा असरणा विवज्जामि मन्दभाइणी । ( ख ) का पुण एसा । कहं देवी वासवदत्ता । भो वअस्स परित्ताहि परित्ताहि । एसा क्खु देवी वासवदत्ता उब्बन्धिअ अत्ताणअं वावादेदि । ( ग ) णं एसा ।

---

समीहितमभीष्टं तदनतिक्रम्य वर्तेते तत् । उद्बन्धनेन मरणमित्यर्थः । नास्ति नाथः स्वामी यस्याः सा अनाथा । नास्ति शरणं रक्षिता यस्याः सा अशरणा । विपद्ये म्रिये । साहसकारिणि साहसं करोतीति साहसकारिणी तत्संबोधनम् । कर्तुमर्हं कार्यम् । 'अर्हे कृत्यतृचश्च ' इति अर्हार्थे ण्यत्प्रत्ययः । न कार्यमकार्यमयोग्यं कर्म । ममेति । हे प्रिये साहसं प्राणत्यागरूपं त्यज्यताम् । यतः पाशे तव कण्ठगते कण्ठे स्थिते मम प्राणाः कण्ठं गताः कण्ठगताः । वहिर्गमनोन्मुखा इत्यर्थः । अतः कारणादयं मम प्रयत्नः। त्वन्निवारणे इति शेषः । स्वस्माययमिति स्वार्थः । असंगत्यलंकारः । 'कार्यकारणयोर्भिन्नदेशत्वे स्यादसंगतिः' इति लक्षणात् ॥ १६ ॥ अम्मो इत्याश्चर्ये ।

---

१ पश्यन्नुच्चैः ससंभ्रमम्. २ ०सर्पन्. ३ ०नयति. ४ कण्टस्थिते. ५ स्वार्थप्र०; स्वार्थाय यत्नो. ६ आत्मगतम्. ७ णं एदाए...पासं करिस्सम् । ( कण्ठे पाशं निक्षिप्य ।। हा ताद हा अज्ज एसा क्खु असरणा वि०. ८ इह ज्जेव्व पासं.

प्रेक्ष्य कृतार्था भूत्वा सुखेनैव जीवितं परित्यक्ष्यामि। (प्रकाशम्।) मुञ्चतु मुञ्चतु मा भर्ता। पराधीनः खल्वयं जनः न पुनरीदृशमवसरं मर्तुं प्राप्नोति। (इति पुनः कण्ठे पाशं दातुमिच्छति।) (क)

राजा—(निर्वर्ण्य। सहर्षमात्मगतम्।) कथं प्रिया मे सागरिका। (कण्ठात्पाशमाक्षिप्य।)

अलमलमतिमात्रं साहसेनामुना ते
त्वरितमयि विमुञ्च त्वं लतापाशमेतम्।
चलितमपि निरोद्धुं जीवितं जीवितेशे
क्षणमिह मम कण्ठे बाहुपाशं निधेहि ॥ १७ ॥

(इति बाहुमाक्षिप्य कण्ठे कृत्वा स्पर्शं नाटयन्।) सखे इयमनभ्रा वृष्टिः।

विदू०—भो एवं न्विदं यद्यकालवातावली भूत्वा नायाति देवी वासवदत्ता। (ख)

(क) अम्मो। कधं एसो भट्टा। जं सच्चं एणं पेक्खिअ पुणोवि मे जीविदाहिलासो संवुत्तो। अह वा एणं पेक्खिअ कदत्था भविअ सुहेण एव्व जीविदं परिच्चइस्सम्। मुञ्चदु मुञ्चदु मं भट्टा। पराहीणो क्खु अअं जणो ण उण ईदिसं अवसरं मरिदुं पावेदि।
(ख) भो एवं ण्णेदं जदि अआलवादावली भविअ ण आआदि देवी वासवदत्ता।

जीविताभिलाषो जीवितार्थमाशा। पराधीनः परतन्त्रः। अवसरं युक्तं कालम्। निर्वर्ण्य सम्यगालोक्य। **अलमलमिति**। अयि सागरिके अमुना ते अतिमात्रं अतिक्रान्ता मात्रा यस्मिन्कर्मणि तद्यथा तथा साहसेन अलमलम्। एवंरूपमतिसाहसं सर्वथा मा कुरु इत्यर्थः। त्वमेतं लतापाशं त्वरितं विमुञ्च। हे जीवितेशे चलितमपि त्वत्साहसं दृष्ट्वा गमनोन्मुखमपि जीवितम्। अर्थान्मम। निरोद्धुं प्रतिबन्द्धुं इह अस्मिन्मम कण्ठे क्षणं बाहुपाशं बाहू एव पाशस्तं निधेहि। मामालिङ्ग्य मज्जीवितं धारय यतस्त्वं तस्येशासीति पर्यायेणोक्तत्वात्पर्यायोक्तमलंकारः। मालिनी वृत्तम्। 'ननमयययुतेयं मालिनी भोगिलोकैः' इति तल्लक्षणम् ॥ १७ ॥ न विद्यते अभ्रं यस्यां सा अनभ्रा। अतर्कितोपनता इत्यर्थः। अकाले वातावलीव अकालवातावली। सुप्सुपेति

१ कण्ठे ददाति; करोति, अर्पयति. २ निरूप्य; आत्मगतमिति नास्ति पुस्तकान्तरे. ३ लतापाशमाक्षिपन्; शीघ्रं लतापाशमाक्षिपति. ४ मपि. ५ एषम्. ६ मिव. ७ विधेहि. ८ बाहुपाशमाक्षिप्य कण्ठे गृहीत्वा स्पर्शसुखमभिनीय विदूषकं प्रति. ९ अज्जउत्तो। एदं पेक्खिअ इदाणीं कदत्था भ० ०स्सम्। (प्रकाशम्।) अज्जउत्त मुञ्च। हीणो इ०. १० अस्मात्परं—तुमं पि देवीए मा अप्पाणं अवराहिणं करेसि (कुरुष्व). ११ वली विव देवी वा० आअच्छिअ अण्णदो ण णइस्सदि; भविअ देवी आअच्छिअ–अण्णदो ण णइस्सदि–अण्णधा ण करिस्सदि.

( ततः प्रविशति वासवदत्ता काञ्चनमाला च। )

वासव०—हञ्जे काञ्चनमाले त तथा चरणनिपतितमार्यपुत्रमवधीर्यागच्छन्त्या मयातिनिष्ठुरं कृतम् । तदिदानीं स्वयमेव गत्वार्यपुत्रमनुनेष्यामि । ( क )

काञ्चन०—कोऽन्यो देवीं वर्जयित्वैवं भणितुं जानाति । वरं स एव देवो दुर्जनो भवतु न पुनर्देवी । तदेत्वेतु भट्टिनी । ( ख )

( परिक्रामतः । )

राजा—अयि मुग्धे किमद्यापि मध्यस्थतया वयं विफलमनोरथाः क्रियामहे ।

काञ्च०—( कर्णं दत्त्वा । ) भट्टिनि एष खलु यथा समीपे भर्ता मन्त्रयते तथा तर्कयामि त्वामेवानुनेतुमित एवागच्छति । ( ग )

वासव०—( सहर्षम् । ) तेन ह्यलक्षितैव पृष्ठतो गत्वा कण्ठे गृहीत्वा प्रसादयिष्यामि । ( घ )

विदू०—भवति सागरिके विश्वस्ता भूत्वा प्रियवयस्यमालप । ( ङ )

---

( क ) हञ्जे कञ्चणमाले तं तहा चलणनिवडिदं अज्जउत्तं अवधीरिअ आअच्छन्तीए मए अदिणिठ्ठुरं किदम् । ता दाणिं सअं जेव्व गदुअ अज्जउत्तं अणुणइस्सम् । (ख) को अण्णो देवीं वज्जिअ एव्वं भणिदुं जाणादि । वरं सो जेव्व देवो दुज्जणो भोदु ण उण देवी । ता एदु एदु भट्टिणी । ( ग ) भट्टिणि एसो क्खु जहा समीवे भट्टा मन्तेदि तहा तक्केमि तुमं एव्वं अणुणेदुं इदो एव्व आअच्छदि । ( घ ) तेण हि अलक्खिदा एव्व पुठ्ठदो गदुअ कण्ठे गेण्हिअ पसादइस्सम् । ( ङ ) भोदि साअरिए वीसत्था भविअ पिअवअस्सं आलवेहि ।

---

समासः । देवीं वर्जयित्वा देव्या महानुभावत्वादेव एतद्भण्यते इत्यर्थः । स एव देवो दुर्जनो भवतु इति देव्या स्वयं गत्वा राज्ञः प्रसादनात्तस्या एव सौजन्यप्रकटनादिति भावः । मध्यस्थतया उदासीनतया । सागरिकाया भावप्रकटनाभावादियमुक्तिः । मध्यस्थस्य भावो मध्यस्थता । सामान्ये नपुंसकात्तल्प्रत्ययः । अन्यथा मध्यस्थातयेति स्यात् । 'त्वतलोर्गुणवचनस्य' इति वचनान्मध्यस्थाशब्दस्य पुंवद्भावाप्राप्तेः ।

---

१ मध्यस्थितया. २ हला. ३ मह च०; तह चलणे पडिदं अज्जउत्तं ओइरिअ गच्छन्तीए मए; ०उत्तं अवधीरिअ गच्छन्तीए अदिणिठ्ठुरं ज्जेव्व मए किदम्. ४ सच्चं. ५ का अण्णा धण्णा. ६ ईदिसं मन्तेदि, देवीं तुमं...ईदिसं चिन्तेदि. ७ ज्जेव्व दुज्जणो भोदु मा भट्टिणी. ८ अतः परं—ता उवसप्पदु भट्टिणी । इत्य०. ९ ०खिदं एव गच्छिअ कण्ठे गहिस्सम्. १० ०ए कीस...स्सं न आलवासि ( आलपसि ).

**वासव०**—( आकर्ण्य । सविषादम् । ) काञ्चनमाले कथं सागरिकैव एवागता । तच्छ्रोष्यामि तावत् । पश्चादुपसर्प्स्यामि । ( तथा करोति । ) ( क )

**साग०**—भर्तः किमेतेनालीकदाक्षिण्येन जीवितादपि वल्लभतराया देव्या आत्मानमपराधिनं करोषि । ( ख )

**राजा**—अयि मिथ्यावादिनी खल्वसि । कुतः ।

श्वासोत्कम्पिनि कम्पितं कुचयुगे मौने प्रियं भाषितं
वक्त्रेऽस्याः कुटिलीकृतभ्रुणि तथा यातं मया पादयोः ।
इत्थं नः सहजाभिजात्यजनिता सेवैव देव्याः परं
प्रेमाबन्धविवर्धिताधिकरसा प्रीतिस्तु या सा त्वयि ॥ १८ ॥

**वासव०**—( सहसोपसृत्य सरोषम् । ) आर्यपुत्र युक्तमेतत् सदृशमेतत् । ( ग )

---

( क ) कञ्चणमाले कधं साअरिआ इदो एव्व । आगदा । ता सुणिस्सं दाव । पच्छा उवसप्पिस्सम् । ( ख ) भट्टा किं एदिणा अलिकदक्खिण्णेन जीविआदोवि वल्लहतराए देवीए अप्पाणं अवराहिणं करेसि । ( ग ) अज्जउत्त जुत्तं एदं सरिसं एदम् ।

---

अलीकदाक्षिण्येनेति दक्षिणस्य भावो दाक्षिण्यं परच्छन्दानुवर्तित्वम् । ब्राह्मणादित्वाद्भावे ष्यञ् । अलीकं मिथ्या च तद्दाक्षिण्यं च तेन । तदेव प्रकटयति—जीवितादपीत्यादिना । मिथ्यावादिनि अवश्यं मिथ्या वदतीति मिथ्यावादिनी तत्संबोधनम् । 'आवश्यकाधमर्ण्ययोर्णिनिः' इति णिनिः । तत्र हेतुं दर्शयति—**श्वासोत्कम्पिनीति** । अस्या देव्याः कुचयोः युगं तस्मिन्कुचयुगे श्वासेन कोपसंवृद्धेन । अभीक्ष्णमुत्कम्पते इति उत्कम्पि । तस्मिन् श्वासोत्कम्पिनि सति मया कम्पितं कम्पः प्रदर्शितः । अस्या मौने मौनमास्थितायामस्यां मया तस्याः संतोषार्थं प्रियं भाषितम् । अस्या मुखे कुटिलीकृते वक्रीकृते भ्रुवौ यस्मिन् तस्मिन् सति । कुटिलशब्दात् 'कृभ्वस्तियोगे संपद्यकर्तरि च्विः' इति च्विः । कुगतीति कृतशब्देन समासः । मया तथा तेन प्रकारेण तस्या पादयोः यातं तत्प्रसादनार्थं पादपतनं कृतम् । इत्थं नः मम परं केवलं यत्स्वाभाविकमाभिजात्यं कुलीनता तेन जनिता कारिता देव्याः सेवैव । यत्कृतं तदौपचारिकं देव्याः सेवार्थमेवेति भावः । या तु प्रेम्ण आबन्धेन विवर्धिता उत्कर्षं नीता अधिको रसो यस्यां सा अधिकरसा प्रीतिः सा त्वयि एव । शार्दूलविक्रीडितं वृत्तम् ॥ १८ ॥ सदृशं यत्त्वया

---

१ सविषादं कर्णं दत्त्वा. २ कुरुतः; इति तथा स्थिते. अस्मात्परं क्वचित्—राजा—आकर्णायतलोचने शशिमुखि प्रोत्सृज्य लज्जां प्रिये स्वाङ्गैरङ्गमनङ्गतापविधुरं गाढं समालिङ्ग मे । किं त्वं माममृतोपमेन वचसा प्रीत्या न सं [ च नो ] भाषसे पीनैरम्बुधरैरिवोन्नतकुचैर्वक्षःस्थलं ह्लादय ॥ इत्य०. ३ स्तनयु०. ४ भुवि. ५ रुषा; कुटिलभ्रूणि प्रणतयः सद्यो मुहुः पादयोः. ६ प्राणाबन्ध. ७ ०कतरा. ८ उपसृत्य स०. ९ हञ्जे कञ्च० साअ० वि एत्थ एव चिट्ठदि । ता सुणम्ह । जाणिअ पच्छा. १० अज्जउत्त किं इमिणा; ०ण्णेण जीविदोवि अधिअवल्लभाए देवीए पुणोवि अत्ताणअं अव० किं करेसि.

राजा—(दृष्ट्वा[1]। सवैलक्ष्यम्।) देवि न खल्वकारणे मामुपालब्धुमर्हसि। सत्यं त्वामेव मत्वा वेषसादृश्य[2]विप्रलब्धा वयमिहागताः। तत्क्षम्यताम्। (इति पादयोः पतति।)

वासव०—(सरोषम्।) आर्यपुत्र उत्तिष्ठोत्तिष्ठ। किमद्यापि सहजाभिजातायाः सेवया दुःखमनुभूयते। (क)

राजा—(स्वगतम्।) किमेतदपि[3] श्रुतं देव्या। तत्सर्वथा देवीप्रसादनं[4] प्रति निराशीभूताः स्मः। (अधोमुखस्तिष्ठति।)

विदू[5]०—भवति त्वं किमुद्बध्यात्मानं व्यापादयसीति वेषसादृश्यमोहितेन मया प्रियवयस्योऽत्रानीतः। यदि मम वचनं न प्रत्येषि तत्प्रेक्षस्वैतं लतापाशम्। (इति[6] लतापाशं दर्शयति।) (ख)

वासव०—(सकोपम्।) काञ्चनमाले एतेनैव लतापाशेन बद्ध्वा गृहाणैनं ब्राह्मणम्। एतां च दुर्विनीतां कन्यकामग्रतः कुरु। (ग)

काञ्चन०—यद्देव्याज्ञापयति। (लतापाशेन विदूषकं[7] बध्नती।) हताश अनुभवेदानीमात्मनो दुर्नयस्य फलम्। सागरिके त्वमप्यग्रतो भव। (घ)

---

(क) अज्जउत्त उट्ठेहि उट्ठेहि। किं अज्जवि[8] सहजाभिजादाए सेवाए दुक्खं अणुहवीअदि। (ख) भोदि तुमं किं उब्बन्धिअ अत्ताणअं वावादेसित्ति[9] वेससारिस्समोहिदेण मए पिअवअस्सो एत्थ आणिदो। जइ[10] मम वअणं ण पत्तिआअसि ता पेक्ख एतं लदापासम्। (ग) कञ्चणमाले एदेण जेव्व लदापासेण वन्धिअ गेण्ह[11] एणं वम्भणम्। एदं च दुव्विणीदं[12] कण्णकं अग्गदो करेहि। (घ) जं देवी आणवेदि। हदास अणुहव दाणिं[13] अत्तणो दुण्णअस्स फलम्। साअरिए तुमं वि अग्गदो होहि[14]।

---

पूर्वोक्तं तस्य योग्यमित्यर्थः। सवैलक्ष्यं सविस्मयम्। उपालब्धुं जुगुप्सितुम्। विप्रलब्धा वञ्चिताः। सहजमभिजाता तस्याः सेवया। व्यापादयसि मारयसि। मोहितेन जातभ्रमेण वञ्चितेनेत्यर्थः। प्रत्येषि विश्वसिषि। दुर्विनीतां धृष्टामित्यर्थः। अत्र 'वास०–(उपसृत्य) आर्यपुत्र युक्तमिदम्' इत्यत आरभ्य 'एतामपि कन्यकामग्रतः कुरु' इत्यन्तेन वासवदत्तासंरब्धवचसा सागरिकासमागमान्तरायभूतेन अनियतप्राप्तिकारणं तोटकं नाम गर्भसधे-

---

१ (सत्रासं; ०सं सागरिकां मुक्त्वा); (देवीं दृष्ट्वात्मगतम्।) अहो सत्यमेवेदं सुखमसुखावसानं नामेति। किमिदानीं करिष्ये। (प्रकाशम्।) न खलु इ०. २ ०श्याद्विप्र०; ०याताः। तत्क्षन्तव्यं; तथा मे क्ष०. ३ कथमे० श्रुतम्। सर्वथा. ४ प्रसादनोपायं; निष्प्रत्याशाः, ०शीभूतोस्मि मन्दभाग्यः. ५ विदू०—(विषादं नाटयति।). ६ हस्तेन गृहीत्वा द०. ७ वसन्तकं गले बद्ध्वा ताडयति; बद्ध्वा. ८ अज्जवि अभिजादाए; ०भिजादाए; ०भिजादसेवादुःखम्. ९ निवज्जासित्ति. १० ता किं ण पेक्खदि भोदी एवं. ११ आणेहि ०णवडुअं, दुट्ठव०. १२ अवि०, दुट्ठकण्णअं. १३ दाव अत्तणो अवि०। देवीए दुट्ठवअणेहिं कडुइका कण्णात्ति सुमरेहि तं वअणं. १४ अस्मात्परं—इत्यग्रतः पश्यन्ती विदूषकमाकर्षन्ती प्रस्थिता.

साग०—( स्वगतम् । ) हा धिक् कथमकृतपुण्यया मया मर्तुमप्यात्मन इच्छया न पारितम् । ( क )

विदू०—( सविषादं राजानमवलोक्य । ) भो वयस्य स्मर मामनाथं देव्या बन्धनाद्विपद्यमानम् । ( ख )

( सर्वानादाय निष्क्रान्ता वासवदत्ता । )

राजा—( सखेदम् । ) कष्टं भोः कष्टम् ।

किं देव्याः कृतदीर्घरोषमुषितास्निग्धास्मितं तन्मुखं
त्रस्तां सागरिकां सुसंभृतरुषा किं तर्ज्यमानां तया ।
बद्धा नीतमितो वसन्तकमहं किं चिन्तयामीत्यहो
सर्वाकारकृतव्यथः क्षणमपि प्राप्नोमि नो निर्वृतिम् ॥ १९ ॥

तत्किमिदानीमिह स्थितेन । देवीं प्रसादयितुमभ्यन्तरमेव प्रविशामि ।

( इति निष्क्रान्ताः सर्वे । )

इति संकेतो नाम तृतीयोऽङ्कः ।

---

( क ) हद्धी कधं अकिदपुण्णाए मए मरिदुं पि अत्तणो इच्छाए न पारिदम् ।
( ख ) भो वअस्स सुमरेहि मं अणाधं देवीए बन्धनादो विवज्जन्तं ।

---

रङ्गमुक्तम् । दुर्विनयस्य कुचेष्टितस्य । अकृतपुण्यया दुर्भाग्ययेत्यर्थः । यतः पुण्यवानेव भाग्यवान् । पारितमित्यत्र 'पार्यते' इति दशरूपकोद्धृतः पाठः । अत्र वासवदत्तायाः सागरिकाया भयमित्युद्वेगो नाम गर्भसंधेरङ्गम् । 'यो हि यस्यापकारी स तस्यारिः' इति दशरूपकम् । **किं देव्या इति** । देव्या वासवदत्तायाः तत्सुपरिचितं कृतः यः दीर्घः दृढ इत्यर्थः रोषः अर्थाद्देव्या तेन मुषितं विलोपितं स्निग्धं रुचिरं स्मितं यस्मिंस्तत् । मुखं चिन्तयामि किं स्मृत्वा शोचामि किमित्यर्थः । अथ वा सुष्ठु संभृता विवृद्धा रुट् क्रोधः यस्यास्तादृश्या देव्या तर्ज्यमानां भर्त्स्यमानामतः त्रस्तां भीतां सागरिकां चिन्तयामि किम् । किं वा बद्धा पाशेन नियन्त्रितं कृत्वा इतो नीतं वसन्तकं चिन्तयामि । इति अनेन प्रकारेण । अहो इति खेदे । सर्वाकारेण सर्वप्रकारेण कृता व्यथा पीडा यस्य सोऽहं क्षणमपि निर्वृतिं चित्तस्वास्थ्यं न प्राप्नोमि लभे । शार्दूलविक्रीडितं वृत्तम् ॥ १९ ॥ **तत्किमिदानीमित्यादि** । अत्र देवीप्रसादायत्ता सागरिकासमागमसिद्धिरिति गर्भबीजोद्भेदादाक्षेप इति गर्भसंधेरङ्गम् ।

इति रत्नावलीटीकायां तृतीयोऽङ्कः ॥ ३ ॥

---

१ विदू०—( विषादं नाटयति । नायकस्य मुखमवलोक्य । ) भो वअस्स सु० मं बम्हणं; ( सविषादम् । ) भो अव०...मं विवज्जन्तं । ( इति राजानमालोकयति । ). २ वास० राजानमालोकयन्ती सागरिकां वसन्तकं च गृहीत्वा काञ्चनमालया सह निष्क्रान्ता, राजानं मुक्त्वा सर्वे निष्क्रान्ताः. ३ अहो क०. ४ तु सं०, क्रमोद्धतरुषा. ५ संत०, संत्यज्यमानां. ६ महो, ०मिमं. ७ म्यद्य भोः. ८ रम्भ. ९ कथ॰पि. १० स्थितेन प्रयोजनम्. ११ देवीसकाशमेव गच्छामि; देवीमेव गत्वा प्रसा॰ ॰ामि. १२ ०तकं ना०; इति रत्नावलीनामप्रधाननाटिकायां तु०.

## चतुर्थोऽङ्कः ।

( ततः प्रविशति गृहीतरत्नमाला[1] सास्रा सुसंगता । )

**सुसंगता**—( सकरुणं निःश्वस्य । ) हा प्रियसखि सागरिके हा लज्जा-वति[3] हा उदारशीले हा सखीजनवत्सले हा सौम्यदर्शने कुत्रेदानीं त्वं मया प्रेक्षितव्या । ( इति रोदिति । ऊर्ध्वमवलोक्य निःश्वस्य च । ) अयि दैवहतक अकरुण असामान्यरूपशोभा तादृशी त्वया यदि निर्मिता तत्कस्मात्पुनरीदृशमव-स्थान्तरं प्रापिता । इयं च रत्नमाला जीवितनिराशया तया कस्यापि ब्राह्मणस्य हस्ते प्रतिपादयेति भणित्वा मम हस्ते समर्पिता । तद्यावत्क-मपि ब्राह्मणमन्विष्यामि । ( परिक्रम्याग्रेतो[2] विलोक्य च । ) अये एष खल्वार्य-वसन्तक इत एवागच्छति । तद्यावदेतस्मा एवैतां प्रतिपादयिष्यामि । (क)

( ततः प्रविशति प्रहृष्टो वसन्तकः । )

---

(क) हा पिअसहि साअरिए हा लज्जाउणि हा उदारसीले हा सहीजणवच्छले हा सोम्मदंसणे कहिं दाणिं तुमं मए पेक्खिदव्वा । अइ देव्वहदअ अअरुण असामण्ण-रूअसोहा तादिसी तुए जइ णिम्मिदा ता कीस उण ईदिसं अवत्थन्तरं पाविदा । इअं अँ रअणमाला जीविदणिरासाए ताए कस्सवि बम्हणस्स हत्थे पडिवादेसित्ति भणिअ मम हत्थे समप्पिदा । ता जाव कं पि बम्हणं अण्णेसामि । अए एसो क्खु अज्जवसन्तओ इदो ज्जेव आअच्छदि । तों जाव एदस्स ज्जेव एदं पडिवादइस्सम् ।

---

अथ चतुर्थाङ्केऽवशिष्टौ अवमर्शनिर्वहणसंधी प्रतिपाद्येते । तत्रादौ तावदग्नि-विद्रवपर्यन्तो वासवदत्ताप्रसक्त्या निरपायरत्नावलीप्राप्त्यवसायात्माऽवमर्शो दर्शितः । अथ वत्सराजप्रवेशं सूचयितुं प्रवेशकमारभते—ततः प्रविशतीत्यादिना । सकरुण-मित्यत्र करुणा सख्या दुर्दशापन्नत्वात् । हा इति विषादे । ' हा विषादशुगर्तिषु ' इत्यमरः । ' लज्जालुके ' इति पाठे लज्जां लाति इति लज्जालुः । लाधातोर्डु-प्रत्ययः । आलुचू तु दुष्प्रापः स्पृहिगृहिपतीत्याद्युक्तत्वात् । लज्जालुरेव लज्जालुका । स्वार्थे कः । तत्संबोधनम् । सौम्यं मनोज्ञं दर्शनं यस्याः सा । दैवहतक कुत्सितदैव । न सामान्या असामान्या रूपस्य शोभा यस्याः सा । जीवितनिराशया जीविते निर्गता

---

१ रत्नमालामादाय; ०शत्युद्विग्नमनाः सु०. २ ०क्रम्याग्रतोऽवलोक्य, विलोक्य. ३ लज्जा-लुए ( ०लुके ). ४ गण. ५ कहिं गदा दाणिं पुणो;...देक्खिदव्वा. ६ दिव्व तुए जदि असा० सा णिम्माविदा; ०हदअ जइ उण अणण्णसाहारणरूवादिसोहा एदादिसी णिम्मिदा. ७ वि ०माला ताए बम्हणस्स कस्सवि पडिवादणीअत्ति; ( रत्नमालां विलोक्य । ) इअं अ. ८ पेक्खामि. ९ ता इमस्सिं; ज्जेव पडि०; ता इह ट्ठिदा एव्व.

**वसन्तकः**—ही ही भो अद्य खलु प्रियवयस्येन प्रसादितया तत्रभवत्या वासवदत्तया बन्धनान्मोचयित्वा स्वहस्तदत्तैर्मोदकैश्चिरस्य तावत्कालस्योदरं मे सुपूरितं कृतम् । अन्यच्चैतत्पट्टांशुकयुगलं कर्णाभरणं च दत्तम् । तद्यावदिदानीं गत्वा प्रियवयस्यं प्रेक्षे । ( परिक्रामति । ) ( क )

**सुसं०**—( रुदंती सहसोपसृत्य । ) आर्य वसन्तक तिष्ठ तावन्मुहूर्तम् । ( ख )

**विदू०**—( दृष्ट्वा । ) कथं सुसंगता । सुसंगते किंनिमित्तं रुद्यते । न खलु सागरिकाया अत्याहितं किमपि संवृत्तम् । ( ग )

**सुसं०**—आर्य वसन्तक एतदेव निवेदयिष्यामि । सा खलु तपस्विनी देव्या उज्जयिनीं नीयत इति प्रवादं कृत्वोपस्थितेऽर्धरात्रे न ज्ञायते कुत्र नीतेति । ( घ )

**विदू०**—( सोद्वेगम् । ) अतिनिर्घृणं खलु कृतं देव्या । ( ङ )

**सुसं०**—इयं च रत्नमाला तया जीवितनिराशया आर्यवसन्तकस्य हस्ते प्रतिपादयेति भणित्वा मम हस्ते समर्पिता । तद्गृहाणैतामार्यः । ( च )

---

( क ) ही ही भो अज्ज क्खु पिअ[1]वअस्सेण पसादिदाए तत्त[3]भोदीए वासवदत्ताए बन्धणादो मोचिअ सहत्थदिण्णेहिं मोदए[4]हिं चिरस्स दाव कालस्स उअरं मे सुपूरिदं किदम् । अण्णं च एदं पट्टंसुअजुअलं कण्णाभरणं अ दिण्णम् । ता जाव दाणिं गदुअ पिअवअस्सं पेक्खामि । ( ख ) अज्ज वसन्तअ चिट्ठ दाव[6] मुहुत्तअम् । ( ग ) कधं[7] सुसंगदा । सुसंगदे किंणिमित्तं रोदीअदि । णं[8] क्खु साअरिआए अच्चाहिदं किंवि संवुत्तम् । ( घ ) अज्ज वसन्तअ एदं[9] ज्जेव णिवेदइस्सम् । सा क्खु तवस्सिणी देवीए उज्जइणिं णीअ[11]दित्ति पवादं कदुअ उवत्थिदे अद्धरत्ते ण जाणीअदि कहिं णीदेत्ति । ( ङ ) अदि[12]णिग्घिणं क्खु किदं देवीए । ( च ) इअं च रअणमाला ताए जीविदणिरासाए अज्जवसन्तअस्स हत्थे पडिवादेसित्ति भणिअ मम हत्थे समप्पिदा । ता गेण्हदु एदं अज्जो ।

---

आशा यस्याः सा तया । अतः परं न जीविष्यामीति मन्यमानयेत्यर्थः । प्रतिपादय देहि । पट्टांशुकयोर्युगलं पट्टांशुकयुगलम् । अत्याहितं महाभीतिः । महारिष्टमिति यावत् । तपस्विनी अनुकम्पार्हा । दीनेति यावत् । अर्धं रात्रेः अर्धरात्रः तस्मिन् । अतिनिर्घृण-

---

१ रुदत्यु०. २ ०स्सपसा०, ०स्सस्स पसण्णाए. ३ देवीए. ४ मोदअलड्डुएहिं उवरं मे. ५ दाणिं पिअ० पेक्खिस्सम्. ६ दाव तुमं. ७ कधं इअं. ८ एत्थ किं. ९ किं क्खु...किंवि सुदं ( श्रुतं ). १० अज्जाहिदं एव्व. ११ पेसिदे–णीदे–त्ति. १२ अदिणिट्ठुरं; हा भोदि साअ० हा असामाण्णणअसोहे हा मिदुभासिणि अदिणिग्घिणं दाणीं देवीए किदं । णमो णमो.'

विदू०—( सास्रम् । ) भवति न मे ईदृशे प्रस्तावे हस्तौ ग्रहीतुं प्रसरतः । ( क )

( उभौ रुदितः । )

सुसं०—( अञ्जलिं बद्ध्वा । ) तस्या एवानुग्रहं कुर्वन्नङ्गीकरोत्वेतार्यः । ( ख )

विदू०—( विचिन्त्य । ) अथ वोपनय । येनानयैव सागरिकाविरहदुःखितं प्रियवयस्यं विनोदयिष्यामि । ( ग )

( सुसंगतोपनयति । )

विदू०—( गृहीत्वा निर्वर्ण्य सविस्मयम् । ) सुसंगते कुतः पुनस्तस्या ईदृशस्यालंकारस्य समागमः । ( घ )

सुसं०—आर्य मयापि सा कौतूहलेन पृष्टैवासीत् । ( ङ )

विदू०—ततस्तया किं भणितम् । ( च )

सुसं०—ततः सोर्ध्वं प्रेक्ष्य दीर्घं निःश्वस्य सुसंगते किमिदानीं तवैतया कथयेति भणित्वा रोदितुं प्रवृत्ता । ( छ )

---

( क ) भोदि ण मे ईदिसे पत्थावे हत्था गेण्हदुं पसरन्ति । ( ख ) ताए ज्जेव अणुग्गहं करन्तो अङ्गीकरेदु एदं अज्जो । ( ग ) अह वा उवणेहि । जेण इमाए ज्जेव्व साअरिआविरहदुक्खिदं पिअवअस्सं विणोदइस्सम् । ( घ ) सुसंगदे कुदो उण ताए ईदिसस्स अलंकारस्स समागमो । ( ङ ) अज्ज मए वि सा कोदुहलेण पुच्छिदा ज्जेवासि । ( च ) तदो ताए किं भणिदम् । ( छ ) तदो सा उद्धं पेक्खिअ दीहं णिस्ससिअ सुसंगदे किं दाणिं तुए एदाए कधाएत्ति भणिअ रोदिदुं पउत्ता ।

---

मतिनिर्दयं कृतम् । ईदृशे एवंविधे प्रस्तावे प्रसङ्गे । सागरिकायामेवंविधदुर्दशां गतायामित्यर्थः । अनुग्रहं कुर्वन्निति । अस्या अङ्गीकारे तस्यामेवानुग्रहः कृतः स्यादिति भावः । सागरिकाया विरहस्तेन दुःखितम् । दुःखमस्य संजातमिति दुःखितः तम् । 'तदस्य संजातमिति तारकादिभ्य इतच्' इति इतच् । ननु इत्याक्षेपे । सामान्यश्चासौ

---

१ सकरुणं; सास्रं सकरुणं कर्णौ पिधाय. २ कृताञ्जलिः. ३ सु० वसन्तकस्य हस्ते-वसन्तकाय-रत्नमालां ददाति; सु० तस्य हस्ते समर्पयति. ४ गृहीत्वा निरूप्य,०त्वा रत्नमालां. ५ एदं घेत्तुं हत्थो पसरदि; अहह भवदि कधं मम ईदिसे पत्थावे एदं गे०. ६ अह ( अथ ) भोदु । गेण्हामि एदं. ७ ०रिआए विरहदुक्खं अवणेमि [ अपनयामि ] पिअवअस्सस्स; विरह-कण्ठिदं, विरहुक्कंठिदं. ८ संभावेमि; विणोदेमि. ९ कुदो ईदिसस्स ०स्सागमो. १० अज्ज दीहं णिस्ससिअ किं दाणिं इमाए चिन्ताएत्ति भ०.

विदू०——ननु कथितमेव सामान्यजनदुर्लभेनानेन परिच्छदेन सर्वथा महाकुलप्रसूतया तया भवितव्यमिति। सुसंगते प्रियवयस्य इदानीं कुत्र। (क)

सुसं०—आर्य एष खलु भर्ता देवीभवनान्निष्क्रम्य स्फटिकशिलामण्डपं गतः। तद्गच्छत्वार्यः। अहमपि देव्याः पार्श्ववर्तिनी भविष्यामि। (ख)

विदू०——एवम्। (ग)

(इति निष्क्रान्तौ।)

इति प्रवेशकः।

---

(ततः प्रविशत्यासनस्थो राजा।)

राजा——(विचिन्त्य।)

सव्याजैः शपथैः प्रियेण वचसा चित्तानुवृत्त्याधिकं
वैलक्ष्येण परेण पादपतनैर्वाक्यैः सखीनां मुहुः।
प्रत्यापत्तिमुपागता न हि तथा देवी रुदत्या यथा
प्रक्षाल्येव तथैव बाष्पसलिलैः कोपोऽपनीतः स्वयम्॥ १॥

---

(क) णं कहिदं जेव सामण्णजणदुल्लहेण इमिणा परिच्छदेण सव्वहा महाकुल-प्पसूदाए ताए होदव्वंत्ति। सुसंगदे पिअवअस्सो दाणिं कहिं। (ख) अज्ज एसो क्खु भट्टा देवीभवणाओ णिक्कमिअ फडिअसिलामण्डवं गदो। ता गच्छदु अज्जो। अहं वि देवीए पासवत्तिणी भविस्सम्। (ग) एव्वम्।

---

जनश्च तेन दुर्लभस्तेन। परिच्छदेनालंकारेण। महच्च तत्कुलं च महाकुलं तत्र प्रसूतया। महाभिजनसमुत्पन्नयेति पाठे अभिजायते अस्मिन्नित्यभिजनः कुलम्। अधिकरणे घञ्। तस्मिन्समुत्पन्नया। स्फटिकशिलानां स्फटिकशिलानिर्मितो वा मण्डपः स्फटिक-शिलामण्डपस्तम्। अभीक्ष्णं पारितः वर्तते इति पार्श्ववर्तिनी। 'बहुलमाभीक्ष्ण्ये' इति णिनिः। देवीमुपचरितुं गमिष्यामीत्यर्थः। सव्याजैरिति। व्याजेन कपटेन युक्त्येति यावत् सहिताः सव्याजाः तैः सव्याजैः शपथैः। आत्मनः मिथ्याभाषणदोषो यथा न स्याद्देवी च विश्वासमियात्तथा वाचोयुक्त्या कृतैः शपथैरित्यर्थः। प्रियेण संतोष-कारिणा वचसा अधिकं चित्तस्य अर्थाद् देव्याः। अनुवृत्त्या अनुकूलाचरणेन। छन्दो-

---

१ उभौ. २ प्रत्यासत्तिं. ३ मम. ४ भो दिण्णं...ज्जेव ताए-इमाए लज्जाए; परिच्छदेण परिअणसंकासंवुत्तघणवेअणेण हिअअभावेण. ५ महाहिजणाए. ६ एतदादि नास्ति पुस्तकान्तरे. ७ (दृष्ट्वा।) अज्ज...सिलाअलं ज्जेव पत्थिदो। ता गच्छ तुमम्. ८ परिचारिणी. ९ होमि.

( सोत्कण्ठं निःश्वस्य । ) इदानीं देव्यां प्रसन्नायां सागरिकाचिन्तैव केवलं मां बाधते । कुतः ।

अम्भोजगर्भसुकुमारतनुस्तथाऽसौ
कण्ठग्रहे प्रथमरागघने विलीय ।
सद्यःपतन्मदनमार्गणरन्ध्रमार्गै-
र्मन्ये मम प्रियतमा हृदयं प्रविष्टा ॥ २ ॥

( विचिन्त्य । ) योऽपि मे विश्वासस्थानं वसन्तकः सोऽपि देव्या संयतस्तिष्ठति । तत्कस्याग्रे बाष्पमोक्षं करिष्ये । ( इति निःश्वसिति । )

( ततः प्रविशति वसन्तकः । )

वस०—( राजानं दृष्ट्वा । ) एष खलु निर्भरोत्कठापरिक्षामामपि श्लाघनीयलावण्यां तनुं समुद्वहन्नुदित इव द्वितीयाचन्द्रोऽधिकतरं शोभते

---

रुदत्येत्यर्थः । परेणात्यर्थेन वैलक्ष्येण लज्जाप्रदर्शनेन इति यावत् । पादपतनैः क्षमा-याचनार्थं चरणपातैः । यद्वा परेण वैलक्ष्येण हेतुभूतेन कृतैः पादपतनैः इति योज्यम् । मुहुः उक्तैः सखीनां प्रियाप्रसादनचतुराणामित्यर्थात् । वाक्यैः वचनैः । देवी वासवदत्ता तथा प्रत्यापत्तिं प्रकृतिभावम् । प्रसन्नतामिति यावत् । न हि नैव नीता यथा रुदत्या तया स्वयमेव बाष्पाण्येव सलिलानि जलानि तैः प्रक्षाल्यैव कोपः अपनीतः दूरीकृतः । अयं भावः । मत्कृतः सान्त्वनोपायैः सा रोदनपरा बभूव । रुदत्याश्च तस्या हृदयं तथा मृदुतामगच्छद्यथा तस्याः कोपो बाष्पसलिलैः प्रक्षालित इव विलयं गतः । उत्प्रेक्षाऽलंकारः । शार्दूलविक्रीडितं वृत्तम् ॥ १ ॥ अत्र सागरिकालाभविरोधिवासवदत्ता-कोपोपशमनात् शक्तिर्नाम विमर्शसंधेरङ्गं प्रदर्शितम् । उत्कण्ठया सहितं सोत्कण्ठम् । अम्भोजेत्यादि । अम्भोजस्य कमलस्य गर्भः मध्यभागः स इव सुकुमारा तनु-र्यस्याः सा अम्भोजगर्भसुकुमारतनुः असौ प्रियतमा सागरिका तदा मकरन्दोद्यान-समेलनसमये । प्रथमरागघने प्रथमः अभिनवः रागः अनुरागः तेन घने निबिडे । दृढे इत्यर्थः । कण्ठग्रहे कण्ठाश्लेषे विलीय विलयं प्राप्य विशीर्णा भूत्वेत्यर्थः । सद्यः तत्क्षणं पतन्तो ये मदनस्य मार्गणाः सायकाः तेषां यानि रन्ध्राणि तान्येव अन्तःप्रवेशार्थं मार्गाः तैः मम हृदयं प्रविष्टा इति मन्ये । मन्येशब्दप्रयोगादुत्प्रेक्षालंकारः । वसन्ततिलकं वृत्तम् ॥ २ ॥ विश्वासस्थानमित्यत्र विश्रामस्थानमिति केषांचित्पाठः । तत्र विश्राम इति शब्दः अपाणिनीयोऽपि बहुलं कविभिः प्रयुज्यते । निर्भरा अतिशयिता या उत्कण्ठा

---

१ प्रसादितायां; इदानीं प्रसन्ना देवी. २ तथा हि. ३ ग्रहेः...रागघनैः. ४ ०रन्ध्रगर्भैः. ५ विश्राम०. ६ संयतः । तत्कस्याग्रतः.

प्रियवयस्यः। तद्यावदेनमुपसर्पामि। ( उपसृत्य। ) स्वस्ति भवते। दिष्ट्या दृष्टोऽसि देवीहस्तगतेनापि मया पुनरप्येताभ्यामक्षिभ्याम्। ( क )

राजा—( दृष्ट्वा सहर्षम्। )अये वसन्तकः प्राप्तः। सखे परिष्वजस्व माम्[1]।

विदू०—( परिष्वजति। )[2]

राजा—वयस्य वेषेणैव निवेदितस्ते देव्याः प्रसादः। तत्कथ्यता-मिदानीं सागरिकायाः का[3] वार्तेति।

( विदूषकः सवैलक्ष्यमधोमुखस्तिष्ठति[4]। )

राजा—वयस्य[5] किं न कथयसि।

विदू०—अप्रियं ते निवेदयितुं न पारयामि। ( ख )

राजा—( सोद्वेगम्[6]। ) वयस्य कथमप्रियम्। व्यक्तमुत्सृष्टं जीवितं तया[7]। हा प्रिये सागरिके। ( इति मूर्च्छति। )

विदू०—( ससंभ्रमम्। ) समाश्वसितु समाश्वसितु प्रियवयस्यः। ( ग )

राजा—( समाश्वस्य। सास्रम्। )

प्राणाः परित्यजत काममदक्षिणं मां[8]
रे दक्षिणा भवत मद्वचनं कुरुध्वम्[9]।
शीघ्रं न यात यदि तन्मुषिताः स्थ नूनं[10]
याता सुदूरमधुना गजगामिनी सा॥ ३॥

---

( क ) एसो क्खु णिब्भरोक्कण्ठापरिक्खामं[11] वि सलाघणिज्जलावण्णं तणुं समुव्वहन्तो उदिओ विअ दुदिआचन्दो अहिअअरं सोहदि पिअवअस्सो। ता जाव णं उवसप्पामि। सोत्थि भवदे। दिट्ठिआ[12] दिट्ठोसि देवीहत्थगदेणावि मए पुणोवि एदेहिं अच्छीहिं। ( ख ) अप्पिअं[13] दे णिवेदिदुं ण पारेमि। ( ग ) समस्ससदु समस्ससदु पिअवअस्सो।

---

तया परिक्षामां कृशाम्। श्लाघनीयं मनोज्ञं लावण्यं यस्याः ताम्। सोद्वेगमुद्वेगेन मनो-व्यथया सहितं यथा तथा। प्राणा इति। हे प्राणा दक्षिणा अनुकूला भवत। मम वचनं मद्वचनं कुरुध्वम्। किं तदित्याह। काममत्यन्तम्। अदक्षिणं दक्षिणः परच्छन्दा-नुवर्ती स न भवति तादृशम्। मां परित्यजत। यदि शीघ्रं न यात गच्छत तर्हि

---

१ माम्। ( विदूषकं परिष्वज्य। ) वयस्य...दिनस्त्वया. २ ( परिष्वज्य। ) भो वअस्स देवीए अणुग्गहीदोम्हि. ३ को वृत्तान्तः; ०रिका किं वर्तते. ४ क्षणं, क्षणमात्रम्. ५ अयि वयस्य. ६ ०गं ससंभ्रमं; साशङ्कम्. ७ ०ष्टजीविता सा, व्यक्तमेषो०; मोहं नाटयति-मोहमुपगतः. ८ काममकामदक्षं; मा मम सत्पथोऽयं हे दक्षि०. ९ शृणुध्वं. १० मूढाः. ११ ०क्खामताए सयंवेसेण सलावण्णतणुं. १२ भो दिट्ठिआ वड्ढसि देवीह० अच्छीहिं जं दिट्ठोसि, देवीसहत्थ०...एदेहिं एव्व. १३ भो पिअवअस्स ण सक्कुणोमि आचक्खिदुम्.

विदू०—भो वयस्य माऽन्यथा संभावय । सा खलु तपस्विनी देव्योज्जयिनीं प्रेषितेति श्रूयते । अतो मयाऽप्रियमिति भणितम् । ( क )

राजा—कथमुज्जयिनीं प्रेषिता । अहो निरनुरोधा मयि देवी । वयस्य केन तवैतदाख्यातम् ।

विदू०—( सास्रं निःश्वस्य । ) भोः सुसंगतया । अन्यच्च । मम हस्ते तया किमपिनिमित्तमियं रत्नमाला प्रेषिता । ( ख )

राजा—किमपरम् । मा समाश्वासयितुम् । तद्वयस्योपनय ।

( विदूषक उपनयति । )

राजा—( गृहीत्वा रत्नमालां निर्वर्ण्य हृदये निधाय । ) अहह ।

कण्ठाश्लेषं समासाद्य तस्याः प्रभ्रष्टयाऽनया ।
तुल्यावस्था सखीवेयं तनुराश्वास्यते मम ॥ ४ ॥

---

( क ) भो वअस्स मा अण्णधा संभावेहि । सा क्खु तवस्सिणी देवीए उज्जइणिं पेसिदत्ति सुणीअदि । अदो मए अप्पिअं त्ति भणिदम् । ( ख ) भो सुसंगदाए । अण्णं च । मम हत्थे ताए किंविणिमित्तं इअं रअणमाला पेसिदा ।

---

नूनं ध्रुवं मुषिता वञ्चिता इति यावत् स्थ भविष्यथ । यतः सा गजगामिनी गज इव गन्तुं शीलं यस्याः सा अधुना संप्रति सुदूरं विप्रकृष्टान्तरं याता गता । वसन्ततिलका वृत्तम् ॥ ३ ॥ अन्यथा अन्यप्रकारेण मा संभावय मनसि कुरु । मृतेति मा मन्यस्वेत्यर्थः । 'सुसं०—सा खलु तपस्विनी कुत्रापि नीतेति । विदू०—( सोद्वेगम् । ) अतिनिर्घृणं खलु कृतं देव्या । पुनः—भो वयस्य मा खलु अन्यथा संभावय...अतोऽप्रियमिति भणितम् । राजा—अहो निरनुरोधा मयि देवी' इत्यनेन वासवदत्तादोषप्रख्यापनाद् अपवादः नाम अवमर्शसंधेरङ्गं दर्शितम् । निर्गतः अनुरोधः अनुवर्तनं यस्याः सा निरनुरोधा । पाठान्तरे निरनुक्रोशा निष्कृपा । 'कृपा दयानुकम्पा स्यादनुक्रोशोऽपि' इत्यमरः । अत्र वासवदत्तयेष्टसंपादनाद्वत्सराजस्यावमाननाच्छलमिति अवमर्शसंधेरङ्गम् । अन्यच्च अन्यदपि कथनीयमस्तीत्यर्थः । किमपिनिमित्तं केनापि हेतुना । कण्ठाश्लेषमिति । तस्याः सागरिकायाः कण्ठाश्लेषमालिङ्गनं प्राप्य प्रभ्रष्टया च्युतया अनया रत्नमालया तुल्या समाना अवस्था यस्याः सा तुल्यावस्था इयं मम तनुः शरीरं सखीव आश्वास्यते सान्त्व्यते । उपमालंकारः ॥ ४ ॥

---

१ ०रनुक्रोशा; ०रोधिता मयि देव्याः. २ वसन्तक. ३ ०यितुम् । ( गृहीत्वा रत्नमालां हृदये निवेश्य । ) अहह. ४ विन्यस्य, ददाति. ५ आश्लिष्यते. ६ आसंक. ७ पेसिदा । अदो मए विप्पिअं त्ति भणिअ ण कधिदम्. ८ ताए एव्व;—एव्व सुसंगदाए; इअं रअणमाला वसन्तअस्स पडिवालेदि त्ति भणिअ ताए सुसंगदाहत्थे समप्पिदा ताए वि मम हत्थे दिण्णा. ९ कज्जेण.

वयस्य[1] त्वं परिधत्स्वैताम् । येन वयमेनां[2] तावद् दृष्ट्वा धृतिं करिष्यामः ।

विदू०——यद्भवानाज्ञापयति । ( परिदधाति । ) ( क )

राजा——( सास्रम्[3] । ) वयस्य दुर्लभं पुनः दर्शनं[4] प्रियायाः ।

विदू०——( दिशोऽवलोक्य सभयम् । ) भो वयस्य मैवमुच्चैर्मन्त्रयस्व । कदापि कोऽपि देव्या इह संचरति । ( ख )

( ततः प्रविशति वेत्रहस्ता[5] वसुंधरा । )

वसुं०——( उपसृत्य[6] । ) जयतु जयतु भर्ता । भर्तः एष खलु रुमण्वतो भागिनेयो विजयवर्मा प्रियं किमपि निवेदयितुकामो द्वारे तिष्ठति । ( ग )

राजा——वसुंधरे[7] अविलम्बितं प्रवेशय ।

वसुं०——यद्देव आज्ञापयति । ( इति निष्क्रम्य विजयवर्मणा[8] सह पुनः प्रविश्य । ) विजयवर्मन् एष खलु भर्ता । तदुपसर्पत्वार्यः । ( . )

विजय०——( उपसृत्य । ) जयतु जयतु देवः । देव दिष्ट्या वर्धसे रुमण्वतो विजयेन ।

राजा[9]——साधु रुमण्वन् साधु । अचिरान्महत्प्रयोजनमनुष्ठितम् । विजयवर्मन् इत आस्यताम् ।

( विजयवर्मोपविशति । )

---

( क ) जं भवं आणवेदि । ( ख ) भो वअस्स मा एव्वं[10] उच्चं मन्तेहि । कआवि को वि देवीए इह संचरदि । ( ग ) जअदु जअदु भट्टा । भट्टा एसो क्खु रुमण्णदो भाइणेओ विजअवम्मा पिअं[11] किंपि णिवेदिदुकामो[12] दुआरे चिट्ठदि । ( घ ) जं देवो आणवेदि । विजअवम्म[13] एसो क्खु भट्टा । ता उवसप्पदु अज्जो ।

---

धृतिं धैर्यं संतोषं वा । वेत्रं वेत्रयष्टिः हस्ते यस्याः सा । वसुंधरा एतन्नाम्नी प्रतीहारी । भागिनेयः भगिन्याः पुत्रः । 'स्त्रीभ्यो ढक्' इति अपत्यार्थे ढक् । निवेदयितुं कामो यस्य स निवेदयितुकामः । 'तुंकाममनसोरपि' इति मलोपः । कतिपयैः अहोभिः

---

१ तद्वयस्य परिधत्स्व; त्वमेवैनां परि०. २ एनामपि दृष्ट्वा तावद् धृत्तिं; विरहवेदनादेस्त्यागं; हृदयविनोदम्. ३ सास्रं निःश्वस्य. ४ सागरिकाया दर्शनम्. ५ खड्ग०; ०शति प्रतीहारी. ६ राजानमुप०. ७ ०धरे गच्छ. ८ ०धर्मणा. ९ राजा—( सपरितोषम् । ) विजयवर्मन् अपि जिता कोसलाः । विज०—देवस्य प्रभावेण । राजा—साधु रुम०...ष्ठितम् । विजयवर्मन् तत्कथय कथाम् । अतिविस्तरतः श्रोतुमिच्छामि. १० एव्वं मण । कोवि इह, कदावि वासवदत्तापरिआरिणी एत्थ संचरे । ( कर्णं दत्त्वा । ) चिट्ठ कोवि पदसद्दो विअ. ११ पिअमिव. १२ ०दिदुं. १३ ०धम्म.

राजा—विजयवर्मन् जितः कोसलाधिपतिः ।

विजय०—देवस्य प्रभावेण ।

राजा—विजयवर्मन् तत्कथय कथमिति । विस्तरतः श्रोतुमिच्छामि ।

विजय०—देव श्रूयताम् । वयमितो देवादेशात्कतिपयैरेवाहोभिरनेककरितुरगपत्तिदुर्निवारेण महता बलसमूहेन गत्वा विन्ध्यदुर्गावस्थितस्य कोसलाधिपतेर्द्वारमवष्टभ्य सेनाः समावेशयितुमारब्धाः ।

राजा—ततस्ततः ।

विजय०—ततः कोसलाधिपतिरपि दर्पात्परिभवमसहमानो हास्तिकप्रायमशेषमात्मसैन्यं सज्जीकृतवान् ।

विदू०—भो लहुं आचक्ख । वेपत इव मे हृदयम् । ( क )

राजा—ततस्ततः ।

विजय०—देव कृतनिश्चयश्चासौ—

योद्धुं निर्गत्य विन्ध्यादभवदभिमुखस्तत्क्षणं दिग्विभागा-
न्विन्ध्येनेवापरेण द्विपपतिपृतनापीडबन्धेन रुन्धन् ।
वेगाद्बाणान्विमुञ्चन्समदकरिघटोत्पिष्टपत्तिर्निपत्य
प्रत्यैच्छद्वाञ्छितादिद्विगुणितरभसस्तं रुमण्वान्क्षणेन ॥ ५ ॥

( क ) [1] भोः लहुं आचक्ख । वेवदि विअ मे हिअअम् ।

अल्पैर्दिनैः । करिणश्च तुरगाश्च पत्तयश्च करितुरगपत्ति । सेनाङ्गत्वात्समाहारद्वंद्वः । अनेकेन करितुरगपत्तिना दुर्निवारं दुःखेन निवारयितुं शक्यं तेन । विन्ध्यस्य विन्ध्यस्थं वा यद् दुर्गं तत्रावस्थितस्य । अवष्टभ्य निरुध्य । समावेशयितुं व्यवस्थापयितुम् । परिभवं द्वाररोधरूपमपमानम् । हास्तिकप्रायं हस्तिनां समूहो हास्तिकम् । 'अचित्तहस्तिधेनोष्ठक्' इति समूहे ठक् । तत्प्रायं यस्मिन् । योद्धुमिति । कृतः निश्चयः येन स कृतनिश्चयः असौ योद्धुं निर्गत्य तत्क्षणं स चासौ क्षणश्च तत्क्षणस्तम् । अपरेण अन्येन विन्ध्येन इव । द्वाभ्यां पिबन्तीति द्विपाः । सुपि इति कः । तेषां पतयः महागजा इत्यर्थः । तेषां या पृतना सेना तस्या आपीडबन्धः घनव्यूहाकारेण रचना तेन

१ कोसलेश्वरः. २ देवप्रसादेन, ०सादात्; देव एवम्. ३ इतो...रेव दिनै० तुरगरथदुर्निवारपत्तिसमुदायेन गत्वा...तेर्द्वारि समा०; सेनाः समावासयितुं—०ब्धवन्तः; देवपादादेशाद्यथानिर्दिष्टैः कतिपयैरेव दिवसैः...गत्वा रुमण्वान्...समारब्धवान्. ४ अमृष्यमाणः. ५ चासौ कोसल–लाधि–पतिः. ६ मुखो दाक्षिणादिग्विभागम्. ७ पीठब०; द्विरदपतिघटापीड०. ८ गज०; ०श्चाथ समदगजो०; ०पत्तिं. ९ प्रत्यागात्; संप्रैच्छत्; वाञ्छिताधि०. १० जवेन. ११ विजयवर्मन् लहुं आचक्खदु.

अपि च ।

अस्त्रव्यस्तशिरस्त्रशस्त्रकषणोत्कृत्तोत्तमाङ्गे क्षणं
व्यूढासृक्सरिति स्वनत्प्रहरणे वर्मोद्गलद्वह्निनि ।
आहूयाजिमुखे स कोसलपतिर्भङ्गप्रतीपीभव-
न्नेकेनैव रुमण्वता शरशतैर्मत्तद्विपस्थो हतः ॥ ६ ॥

विदू०—जयतु जयतु भवान् । जितमस्माभिः । (इत्युत्थाय नृत्यति ।) (क)

राजा—साधु कोसलपते साधु । मृत्युरपि ते श्लाघ्यो यस्य शत्रवो ऽप्येवं पुरुषकारं वर्णयन्ति । ततस्ततः ।

विजय०—देव ततो रुमण्वानपि कोसलेषु मद्भ्रातरं ज्यायांसं जयवर्माणं स्थापयित्वा समरव्रणितमशेषबलमनुवर्तमानः शनैः शनैरागच्छत्येव ।

राजा—वसुंधरे उच्यतां यौगन्धरायणः दीयतां मत्प्रसादोऽस्येति ।

(क) जअदु जअदु भवं । जितं अम्हेहिं ।

दिग्विभागान्दिक्प्रान्तान् रुन्धन् व्याप्नुवन् । अभिमुखः अभवत् पुरः स्थितः । क्षणेन तत्क्षणं बाणान् विमुञ्चन् । समदानां करिणां घटाः समूहाः ताभिः उत्पिष्टाः चूर्णिताः पत्तयो येन यस्य वा स तथोक्तः । वाञ्छितस्य अभीष्टस्य कोसलपतिना सह द्वंद्वस्य या आप्तिः प्राप्तिस्तया द्विगुणितः रभसो वेगो हर्षो वा यस्य स वाञ्छिताप्तिद्विगुणितरभसः रुमण्वान् वेगात् निपत्य तं प्रत्यैच्छत् प्रतियातः । वीरो रसः । उत्प्रेक्षालंकारः । स्रग्धरा वृत्तम् ॥ ५ ॥ अस्त्रव्यस्तेति । अस्त्रैः शस्त्रैः व्यस्तानि व्याक्षिप्तानि शिरस्त्राणि यैस्तादृशानि शस्त्राणि तेषां कषणैः प्रहारैरिति यावत् । उत्कृत्तानि छिन्नानि उत्तमाङ्गानि शिरांसि यस्मिन् । क्षणं व्यूढा वृद्धा असृजः रक्तस्य सरित् यस्मिन् । पुनश्च स्वनन्ति शब्दायमानानि प्रहरणानि यस्मिन् तथाभूते । तथा च वर्मभ्यः कवचेभ्यः उद्गलन् प्रादुर्भवन्वह्निः अग्निर्यस्मिन् तादृशे आजिमुखे रणशिरसि भङ्गप्रतीपीभवन् भङ्गस्य स्वपराभवस्य प्रतीपीभवन् तं वारयन् इत्यर्थः । पाठान्तरे प्रधाने मुख्यबले भग्ने पराभूते सति । मत्तद्विपस्थः स कोसलपतिः आहूय आकार्य एकेन एव रुमण्वता शरशतैर्हतः । अनुप्रासोऽलंकारः । शार्दूलविक्रीडितं वृत्तम् ॥ ६ ॥ पुरुषकारं पराक्रमम् । समरे व्रणितं संजातव्रणम् । अनुवर्तमानः अनुसरन् । तेन

१ अस्त. २ कषणैः कृत्तो०. ३ ०र्मोद्गल०; ०रणोद्वेगोद्गम०. ४ भग्ने प्रधाने बले; भग्नप्रतीपः; अस्मात्परं—राजा—कथमस्मदीयान्यपि बलानि भग्नानि । विज०—एकेनैव इत्य०. ५ राजा—कोसलपते मृ०. ६ स्वभ्रा०; कोसलेशज्यायांसं भ्रा०. ७ ०प्रहारव्रणितहास्तिकप्रायमशेषसैन्यं; गाढ–समर–प्रहार०. ८ मन्दं मन्दं. ९ प्रदर्श्यताम्,–मत्प्रसादस्य विभवः इति; प्रियकथानुरूपेण दीय०. १० भवदा.

वसुं०—यद्देव आज्ञापयति । ( इति विजयवर्मणा सह निष्क्रान्ता । ) (क)

( ततः प्रविशति काञ्चनमाला । )

काञ्चन०—आज्ञप्तास्मि देव्या यथा—हञ्जे काञ्चनमाले गच्छ । एतमैन्द्रजालिकमार्यपुत्राय दर्शय । ( परिक्रम्यावलोक्य च । ) । एप खलु भर्ता । तद्यावदुपसर्पामि । ( उपसृत्य । ) जयतु जयतु भर्ता । देवी विज्ञापयति—एप खलूज्जयिनीतः सर्वसिद्धिर्नामैन्द्रजालिक आगतः । तत्प्रेक्षतामेनमार्यपुत्र इति । ( ख )

राजा—अस्ति नः कौतुकमिन्द्रजाले । तच्छीघ्रं प्रवेशय ।

काञ्चन०—यद्देव आज्ञापयति । ( ग )

( निष्क्रम्य पुनः पिच्छिकाहस्तेनैन्द्रजालिकेन सह प्रविशति । )

ऐन्द्रजालिकः—( पिच्छिकां भ्रमयन् । )

प्रणमत चरणाविन्द्रस्येन्द्रजालिकपिनद्धनाम्नः ।
तथैव शम्बरस्य मायासुप्रतिष्ठितयशसः ॥ ७ ॥ ( घ )

---

( क ) जं देवो आणवेदि । ( ख ) आणत्तम्हि देवीए जह—हञ्जे काञ्चणमाले गच्छ । एदं इन्दजालिअं अज्जउत्तस्स दंसेहि । एसो क्खु भट्टा । ता जाव उवसप्पामि । जअदु जअदु भट्टा । देवी विण्णवेदि—एसो क्खु उज्जइणीदो सव्वसिद्धी णाम इन्दजालिओ आअदो । ता पेक्खदु णं अज्जउत्तो त्ति । ( ग ) जं देवो आणवेदि ।

( घ ) पणमह चलणे इन्दस्स इन्दजालिअपिणद्धणामस्स ।
तह ज्जेव्व संबरस्स माआसुपरिट्ठिदजसस्स ॥

---

सद्देत्यर्थः । प्रसादः लक्षणया प्रासादानुरूपं पारितोषिकम् । ऐन्द्रजालिकः मायिकः । इन्द्रजालं शिल्पमस्य । 'शिल्पम्' इति ठक् । इन्द्रजालिक इति पाठे इन्द्रजालमस्त्यस्य । 'अत इनिठनौ' इति मत्वर्थे ठन् । पिच्छिका मयूरपिच्छकूर्चः । सा हस्ते यस्य तेन । प्रणमतेति । इन्द्रजालके पिनद्धं बद्धं नाम यस्य तस्य इन्द्रजालकपिनद्धनाम्नः इन्द्रस्य चरणौ प्रणमत । तथैव मायायामिन्द्रजालविद्यायां सुप्रतिष्ठितं यशो यस्य तस्य मायासुप्रतिष्ठितयशसः शम्बरस्य तन्नामकासुरस्य च चरणौ प्रणमत ॥ ७ ॥

---

१ ऐन्द्रजालिके. २ प्रविष्टा । ( प्रविश्य । )—एदु एदु अज्जा । ( ऐन्द्रजालिकः परिक्रामति । ) काञ्चन०—एसो भट्टा । ता उपसप्पदु अज्जो । ऐन्द्र०—( उपसृत्य । ) जअदु. ३ ०कां भ्रामयित्वा बहुधा—०विधं—हास्यं कृत्वा. ४ इन्दजालम्हि लध्धसक्खस्स ( ०जाले लब्धसाक्ष्यस्य ) । तह अज्ज सं० सुपरिच्छिदसव्वजगस्स ( सुपरीक्षितसर्वजगतः ); तह संसरे सम्ब०, ०जालिअम्मि लध्धणामस्स । तह एव्व अज्ज ( अथ ) असुरस्स—सम्बरस्स सुपरि०.

**काञ्चन०**—( उपसृत्य । ) भर्तः एष खल्वैन्द्रजालिकः । ( क )

**ऐन्द्र०**—जयतु जयतु देवः । देव ।

किं धरण्यां मृगाङ्क आकाशे महीधरो जले ज्वलनः ।
मध्याह्ने प्रदोषो दर्श्यतां देह्याज्ञप्तिम् ॥ ८ ॥

अथ वा किं बहुना जल्पितेन ।

मम प्रतिज्ञैषा यद्यद् हृदयेनेहसे संद्रष्टुम् ।
तत्तद्दर्शयाम्यहं गुरोर्मन्त्रप्रभावेण ॥ ९ ॥ ( ख )

**विदूषकः**—भो वयस्य अवहितो भव । ईदृशोऽस्यावष्टम्भो येन सर्वं संभाव्यते । ( ग )

**राजा**—भद्र तिष्ठ तावत् । काञ्चनमाले उच्यतां देवी । युष्मदीय एवायमैन्द्रजालिको विजनीकृतश्चायमुद्देशः । तदेहि । सहितावेवैनं पश्याव इति ।

---

( क ) भट्टा एसो क्खु इन्दजालिओ ।

( ख ) जअदु जअदु देवो । देवं ।

किं धरणिए मिअङ्को आआसे महिहरो जले जलणो ।
मज्झण्हम्हि पओसो दाविज्जइ देहि आणत्तिम् ॥

अह वा किं बहुणा जप्पिदेण ।

मज्ज पइण्णा एसा जं जं हिअएण इहसि संदट्ठुम् ।
तं तं दंसेमि अहं गुरुणो मन्तप्पभावेण ॥

( ग ) भो वअस्स अवहिदो होहि । ईदिसो से अवठ्ठम्भो जेण सव्वं संभावीअदि ।

---

**किं धरण्यामिति** । धरण्यां किं मृगः अङ्कः यस्य स मृगाङ्कः चन्द्रः प्रदर्श्यताम् । तथा च आकाशे महीधरः पर्वतः जले ज्वलनः अग्निः मध्याह्ने प्रदोषः रजनीमुखं प्रदर्श्यताम् । आज्ञप्तिं देहि । यदादिशसि तद्भवेदित्यर्थः ॥ ८ ॥ **ममेति** । मम प्रतिज्ञा एषा । यद्यद् हृदयेन मनसा संद्रष्टुमीहसे इच्छसि तत्तद्गुरोः मन्त्रस्य प्रभावेण सामर्थ्येन दर्शयामि ॥ ९ ॥ अत्र श्लोकद्वयेनैन्द्रजालिको मिथ्याग्निसंभ्रमोत्थापनेन वत्सराजस्य हृदयस्थसागरिकादर्शनानुकूलां निजशक्तिमाविष्कृतवानिति व्यवसायाख्यमङ्गमिदम् । अवष्टम्भः उत्साहभरः । युष्माकमयं युष्मदीयः । 'त्यदादीनि च' इति वृद्धसंज्ञायां 'वृद्धाच्छः' इति तस्येदमित्यर्थे छः । विगता जना अस्मादिति विजनः । न

---

१ यदि युष्मदीयोयं. २ देव किं । धरणीए मिअअङ्को. ३ सिज्जउ ( सिध्यतु ) तह, दाव सिज्जदु. ४ महाराअ कोसम्बीपते किं; अह वा–किं जप्पिएण बहुणा जं जं हिअएण इच्छसि द०. ५ एसा भणामि हिअएण जं–सि दट्ठव्वम् ( द्रष्टव्यं ); महसि (काङ्क्षसि ) दट्ठुम्. ६ दावमि. ७ प्पसादेण. ८ भो ईदिसो वे.

काञ्चन०—यद्भर्ताज्ञापयति । ( इति निष्क्रान्ता । ) ( क )

( ततः प्रविशति वासवदत्ता काञ्चनमाला च । )

वासव०—काञ्चनमाले उज्जयिनीत आगत इत्यस्ति मे तस्मिन्नैन्द्रजालिके पक्षपातः । ( ख )

काञ्चन०—ज्ञातिकुलबहुमानः खल्वेष भर्त्र्याः । तदेत्वेतु भर्त्री । ( इति परिक्रामतः । ) ( ग )

वासव०—( उपसृत्य । ) जयतु जयत्वार्यपुत्रः । ( घ )

राजा—देवि बहुतरमनेन गर्जितम् । तदिहोपविश्यताम् । पश्यामस्तावत् ।

( वासवदत्तोपविशति । )

राजा—भद्र प्रस्तूयतामिन्द्रजालम् ।

ऐन्द्रजा०—यद्देव आज्ञापयति । ( इति बहुविधं नाट्यं कृत्वा पिच्छिकां भ्रमयन् । )

हरिहरब्रह्मप्रमुखान्देवान्दर्शयामि देवराजं च ।
गगने सिद्धचारणसुरवधूसार्थं च नृत्यन्तम् ॥ १० ॥

तत्प्रेक्षतां देवः । ( ङ )

---

( क ) जं भट्टा आणवेदि । ( ख ) कञ्चणमाले उज्जइणीदो आअदोत्ति अत्थि मे तस्सिं इन्दजालिए पक्खवादो । ( ग ) णादिकुलबहुमाणो क्खु एसो भट्टिणीए । ता एदु एदु भट्टिणी । ( घ ) जेदु जेदु अज्जउत्तो । ( ङ ) जं देवो आणवेदि

हरिहरबम्हप्पमुहे देवे दंसेमि देवराअं च ।
गगणम्मि सिद्धचारणसुरवहुसत्थं च णच्चन्तम् ॥

तां पेक्खदु देवो ।

---

विजनः अविजनः । अविजनः विजनः संपद्यमानः कृतः विजनीकृतः । पक्षे पातः पक्षपातः । अभिमान इत्यर्थः । बहुतरं गर्जितं स्वपाटवमधिकृत्य अतीव विकत्थितम् । प्रस्तूयतामारभ्यताम् । हरिहरेति । हरिहरब्रह्माणः प्रमुखाः प्रमुखे वा येषां तान् । देवराजमिन्द्रं च दर्शयामि । सिद्धचारणा देवयोनिविशेषाः । सुरवध्वो देवाङ्गनाः तासां सार्थं समूहं च नृत्यन्तं दर्शयामि ॥ १० ॥ श्लोकचतुष्टयस्य गाथाच्छन्दः ।

---

१ इति निष्क्रम्य वासवदत्तया सह प्रविशति । वास०. २ बहलेन; अनेन विस्फूर्जितम्. ३ तदितः स्थीयताम्, तदेहि उप०. ४ तामिदानीम्; ०नां बहुविधमिन्द्र०. ५ अत्थि तहिं इन्द० बहुमाणो. ६ माइ ( मातृ ) उल०, णामि ( नामि )०: ०कुलपक्खवादो भ०. ७ अस्य स्थाने—सर्वे सविस्मयं पश्यन्ति.

**राजा**—( ऊर्ध्वमवलोक्यासनादवतरन् । ) आश्चर्यमाश्चर्यम् । देवि पश्य ।

एष ब्रह्मा सरोजे रजनिकरकलाशेखरः शंकरोऽयं
दोर्भिर्दैत्यान्तकोऽसौ[3] सधनुरसिगदाचक्रचिह्नैश्चतुर्भिः ।
एषोऽप्यैरावतस्थस्त्रिदशपतिरमी देवि देवास्तथान्ये
नृत्यन्ति व्योम्नि चैताश्चलचरणरणन्नूपुरा दिव्यनार्यः ॥ ११ ॥

**वासव०**—आश्चर्यमाश्चर्यम् । ( क )

**विदूषकः**—( अपवार्य । ) आः दास्याःपुत्र ऐन्द्रजालिक किमेतैर्देवैरप्सरोभिश्च दर्शितैः । यदि तेऽनेन परितुष्टेन कार्यं तत्सागरिकां दर्शय[6] । ( ख )

( ततः[7] प्रविशति वसुंधरा । )

**वसुंधरा**—( राजानमुपसृत्य । ) जयतु जयतु भर्ता । अमात्यो यौगन्धरायणो विज्ञापयति—एष खलु विक्रमबाहोः प्रधानामात्यो वसुभूतिर्बाभ्रव्येन कञ्चुकिना सहागतः । तदर्हति देवोऽस्मिन्नेव सुन्दरमुहूर्ते प्रेक्षितुम् । अहमपि कार्यशेषं समाप्यागत एवेति । ( ग )

---

( क ) अच्चरिअं अच्चरिअम् । ( ख ) आः दासीएपुत्ता इन्दजालिअ किं एदेहिं देवेहिं अच्छराहिं च दंसिदाहिं । जइ दे इमिणा परितुट्ठेण कज्जं ता साअरिअं दंसेहि । ( ग ) जेदु जेदु भट्टा । अमच्चो जोअन्धराअणो विण्णवेदि—एसो क्खु विक्कमबाहुणो पहाणा[11]मच्चो वसुभूदी बब्भव्वेण कञ्चुइणा सह आगदो । ता अ[12]रुहदि देवो इमस्सिं ज्जेव सुन्दरमुहुत्तए पेक्खिदुम् । अहंपि कज्जसेसं समाविअ आगदो एव्वत्ति ।

---

एष इति । व्योम्नि आकाशे सरोजे आसनभूते कमले एष ब्रह्मा दृश्यते । अयं रजनिकरस्य चन्द्रस्य कला शेखरः शिरोभूषणं यस्य स रजनिकरकलाशेखरः शंकरः । असौ दूरे दृश्यमानः धनुः शार्ङ्गं असिः नन्दकाख्यः गदा कौमोदकी नाम्नी चक्रं सुदर्शनं तानि चिह्नानि तैः सहितैः सधनुरसिगदाचक्रचिह्नैः चतुर्भिः दोर्भिः उपलक्षितः दैत्यान्तको विष्णुः । एष समीपतरवर्ती ऐरावते तिष्ठतीति ऐरावतस्थः । सुपि इति कः । त्रिदशपतिः इन्द्रः । तथा च हे देवि अमी अन्ये देवाः । दृश्यन्ते इति शेषः । एताः च चलेषु चरणेषु रणन्तः नूपुरा मञ्जीरा यासां तादृश्यः दिवि भवा दिव्याः । दिगादित्वाद्यत् । दिव्याश्च ता नार्यश्च दिव्यनार्यः सुराङ्गनाः । अप्सरस इत्यर्थः । नृत्यन्ति । तान्सर्वानेतान्पश्येति पूर्वेण संबन्धः । स्रग्धरा वृत्तम् ॥११॥ दास्याःपुत्र ।

---

१ ऊर्ध्वं दृष्ट्वा; ०रन्सविस्मयम्. २ अहो आश्चर्यम्; अस्मात्परं—वसन्त०—अच्चरिअं अच्चरिअं । राजा—देवि. ३ अयं. ४ त्रिदिव. ५ वसं०; विदू०-साहु रे इन्दजा० साहु । दंसिदं क्खु तुए आत्तणो विण्णाणं । ( अप० ). ६ अस्मात्परं—राजा-भद्र भवतु तथा. ७ प्रविश्य वसुं०. ८ नास्त्येतत्क्वचित्. ९ हा इन्द०. १० ०अणो देवस्स चलणजुअले इदं. ११ पहाणो अमच्चवसुभूदी, बब्भव्वक०... । ता पेक्ख एदं । इमं एव्व सुन्दरं मुहुत्तं ( अयमेव सुन्दरो मुहूर्तः ); सिंहलेश्वरप्पधा०; ०बाहुणा पहाणामच्चो अणुप्पेसिदो. १२ अरिहासि देव.

वासव०—आर्यपुत्र तिष्ठतु तावदिन्द्रजालम् । मातुलगृहात्प्रधानामात्यो वसुभूतिरागतः । तं तावत्प्रेक्षतामार्यपुत्रः । ( क )

राजा—यथाह देवी । ( ऐन्द्रजालिकं प्रति । ) भद्र विश्रम्यतामिदानीम् ।

ऐन्द्रजालिकः—यद्देव आज्ञापयति । ( पुनः पिच्छिकां भ्रमयति । ) ( निष्क्रामन् । ) एकः पुनर्मम खेलोऽवश्यं देवेन प्रेक्षितव्यः । ( ख )

राजा—भद्र द्रक्ष्यामः ।

वासव०—काञ्चनमाले गच्छ त्वं देह्यस्य पारितोषिकम् । ( ग )

काञ्चन०—यद्देव्याज्ञापयति । ( ऐन्द्रजालिकेन सह निष्क्रान्ता । ) ( घ )

राजा—वसन्तक प्रत्युद्गम्य प्रवेश्यतां वसुभूतिः ।

विदू०—यद्देव आज्ञापयति । ( इति वसुंधरया सह निष्क्रान्तः । ) ( ङ )

( ततः प्रविशति वसन्तकेनानुगम्यमानो वसुभूतिर्बाभ्रव्यश्च । )

वसुभूतिः—( समन्तादवलोक्य । ) अहो वत्सेश्वरस्यानुभावः । इह हि—

आक्षिप्तो जयकुञ्जरेण तुरगान्निर्वर्णयन्वल्लभा-
न्संगीतध्वनिना हृतः क्षितिभृतां गोष्ठीषु तिष्ठन्क्षणम् ।

---

( क ) अज्जउत्त चिट्ठदु दाव इन्दआलं । माउलघरादो पहाणमच्चो वसुभूदी आगदो । तं दाव पेक्खदु अज्जउत्तो । ( ख ) जं देवो आणवेदि । एक्को उण मह खेलओ अवस्सं देवेण पेक्खिदव्वो । ( ग ) कञ्चणमाले गच्छ तुमं देहि से पारितोसिकम् । ( घ ) जं देवी आणवेदि । ( ङ ) जं देवो आणवेदि ।

---

'षष्ठ्या आक्रोशे' इति अलुक् । शोभनः मुहूर्तः सुमुहूर्तस्तस्मिन् । इन्द्रजालं ऐन्द्रजालिकमायाप्रेक्षणमित्यर्थः । देह्यस्येत्यत्र संप्रदानस्य शेषत्वविवक्षायां षष्ठी । प्रत्युद्गम्यादरदर्शनार्थमभिमुखं गत्वा । अनुभावः प्रभावः विभूतिरिति यावत् । आक्षिप्त इति । वल्लभान्राज्ञोऽभीष्टान् । मनोज्ञान् इत्यर्थः । तुरगान् निर्वर्णयन्सावधानेन पश्यन् अहम् । कुञ्जः हस्तिनो हनुर्दन्तो वा सोऽस्यास्तीति कुञ्जरः । जयस्य जयावहः कुञ्जरः जयकुञ्जरः तेन आक्षिप्तः आकृष्टः । दर्शनीयाश्वबद्धदृष्टिरपि दर्शनीयतरकुञ्जरेणाकृष्टदृष्टिरस्मीत्यर्थः । क्षितिभृतां वत्सेश्वरोपासनार्थं प्राप्तानां सामन्तानां

---

१ नास्त्येतन्क्वाचित्. २ एतम् । द्रक्ष्यामि. ३ प्रवेशय वसुभूतिम्. ४ प्रत्युद्गम्यमानः, प्रविशति वसु० बा० वसन्तकश्च. ५ अस्मात्प्राक्-वसन्त०—एदु एदु अमच्चो वसुभूदी । इत्य०. ६ ०लोक्य सविस्मयम्. ७ भवनद्वारमासः. ८ अक्षिप्ताक्षपक्ष०. ९ क्षितिभुजां. १० पेक्खणं, इन्दजा०. ११ कुलादो अज्जो अम०. १२ परं एक्को खिड्डको.

सद्यो विस्मृतसिंहलेन्द्रविभवः कक्षाप्रदेशेऽप्यहो
द्वाःस्थेनैव कुतूहलेन महता ग्राम्यो यथाहं कृतः ॥ १२ ॥

बाभ्रव्यः—वसुभूते अद्य खलु चिरात्स्वामिनं द्रक्ष्यामीति यत्सत्य-मानन्दातिशयेन[1] किमप्यवस्थान्तरमनुभवामि[2] । कुतः ।

विवृद्धिं कम्पस्य प्रथयतितरां साध्वसवशा-
दविस्पष्टां दृष्टिं तिरयतितरां बाष्पपटलैः[3] ।
स्खलद्वर्णां वाणीं जडयतितरां गद्गदतया[4]
जरायाः साहाय्यं मम हि परितोषोऽद्य कुरुते ॥ १३ ॥

विदूषकः—(अग्रे[5] भूत्वा ।) एत्वेत्वमात्यः । (क)

वसुभू०—(विदूषकस्य कण्ठे रत्नमालां दृष्ट्वाऽपवार्य[6] ।) बाभ्रव्य जाने[7] सैवेयं रत्नमाला या देवेन राजपुत्र्यै प्रस्थानकाले दत्ता ।

(क) एदु एदु अमच्चो[8] ।

सभासु मण्डलेषु क्षणं तिष्ठन् संगीतस्य ध्वनिः स्वरः तेन संगीतध्वानिना हृतः प्रसभमाकृष्ट इत्यर्थः । अहो इत्याश्चर्ये । एवं कक्षाप्रदेशे प्रकोष्ठे अपि । कक्षाप्रदेशस्थस्य मे एवमवस्था । मुख्यगृहस्थितस्य का भवेदिति अपेरर्थः । सद्यः तत्क्षणं विस्मृतसिंहलेन्द्रविभवः विस्मृतः सिंहलनृपतेः विभव ऐश्वर्यं येन तथाभूतोऽहं द्वारि तिष्ठतीति द्वाःस्थं तेन महता कुतूहलेन कुतूहलकारिणा वैभवेनेति यावत् । ग्राम्यो यथा ग्रामे भवः ग्राम्यः । दिगादित्वाद्यत् । स इव कृतः । नगर गतो ग्राम्यो यथा तत्रस्थवैभवं दृष्ट्वा आश्चर्यचकितो भवति तथाहं भूतोस्मीत्यर्थः । उदात्तालंकारः । उपमा च । शार्दूलविक्रीडितं वृत्तम् ॥ १२ ॥ किमप्यनिर्वचनीयम् । अन्या अवस्था अवस्थान्तरम् । अन्यार्थकेनान्तरशब्देन मयूरव्यंसकादित्वात्समासः । विवृद्धिमिति । अद्य मम परितोषः स्वामिदर्शनं भविष्यतीति आनन्दः जरायाः । सहायस्य भावः साहाय्यम् । 'सहायाद्वा' इति ष्यञ् । कुरुते हि । तदेव विशदयति—साध्वसवशाद् राज्ञः पुरोगमनभयहेतोः कम्पस्य विवृद्धिं प्रथयतितरामतिशयेन वर्धयति । बाष्पपटलैः अश्रुजलजालकैः अविस्पष्टां मन्दां दृष्टिं तिरयतितरामतिशयेन छादयति । तिरःशब्दात्तिरस्करोतीति णिच् । ततस्तिङश्चेति तरप् । किमेत्तिङव्ययेति तरवन्तादाम् । तथा च स्खलन्तोऽस्पष्टं निर्गच्छन्तः वर्णा यस्यां तां स्खलद्वर्णां वाणीं गद्गदतया वाक्स्खलनेन जडयतितरामतिशयेन जडां करोति । पूर्ववज्जडशब्दाण्णिच् । तिङन्तात्तरबन्तादाम् । अत्र जरोत्पन्नकम्पादेः प्राक्सिद्धस्य परितोषजन्यसाध्वसादिना गुणोत्कर्षवर्णनादनुगुणालंकारः । तदुक्तं—'प्राक्सिद्धस्वगुणोत्कर्षोऽनुगुणः परसंनिधेः' इति । शिखरिणी वृत्तम् ॥ १३ ॥

१ (सहर्षम् ।) वसु०. २ नान्यदवस्था०...३ तिरयति पुनर्बाष्पसलिलैः. ४ ०वर्णा वाणी भवति नितरां. ५ अग्रतः. ६ अवलोक्य निःश्वस्याप०. ७ जायते, आपि प्रत्यभिज्ञायते. ८ ०च्चो वसुभूदी.

बाभ्रव्यः——अमात्य अस्ति[1] सादृश्यम् । तत्किं वसन्तकं[2] पृच्छामि प्राप्तिमस्याः ।

वसुभू०——बाभ्रव्य मा मैवम् । महति राजकुले रत्नबाहुल्यान्न[3] दुर्लभो भूषणानां संवादः । (इति परिक्रामति ।)

विदू०——भो एष खलु महाराजः । तदुपसर्पत्वमात्यः । ( क )

वसु०——( उपसृत्य । ) विजयतां महाराजः ।

राजा——( उत्थाय[4] । ) आर्य अभिवादये[5] ।

वसु०——आयुष्मान्भव[6] ।

राजा——आसनमासनमार्याय ।

विदू०——एतदासनम् । उपविशत्वमात्यः । ( ख )

( वसुभूतिरुपविशति[7] । )

बाभ्रव्यः[8]——देव बाभ्रव्यः प्रणमति ।

राजा[9]——(पृष्ठे हस्तं दत्त्वा ।) बाभ्रव्य इत आस्यताम् ।

( बाभ्रव्य उपविशति । )

विदू०——अमात्य एषा देवी वासवदत्ता प्रणमति । ( ग )

वासव०——आर्य प्रणमामि । ( घ )

वसुभू०——आयुष्मति वत्सराजसदृशं पुत्रमाप्नुहि[10] ।

( सर्वे उपविशन्ति । )

राजा——आर्य[11] वसुभूते अपि कुशलं तत्रभवतः सिंहलेश्वरस्य ।

---

( क ) भो[12] एसो क्खु महाराओ । ता उपसप्पदु अमच्चो । ( ख ) एदं[13] आसणम् । उपविसदु अमच्चो । ( ग ) अमच्च एसा[14] देवी वासवदत्ता पणमदि । ( घ ) अज्ज पणमामि ।

---

देवेन विक्रमबाहुना । प्रस्थानसमये अर्थात्सिंहलद्वीपात् । संवादः सादृश्यम् । अन्यत्सदृशं भूषणं संभवेदित्यर्थः । उत्थायेति--प्रवयसो वसुभूतेरादरदर्शनार्थमुत्थानम् । आयुष्मानि-

---

१ सत्यमस्त्येव. २ वसन्तकादवगच्छामि—मः प्रभवमस्याः. ३ रत्नमालाबा०. ४ सादरम्; राजा—वसुभूते इदमासनमास्यताम् । विदू०—इदमासणं उपाविशदु अमच्चो । राजा—( सादरमुत्थाय । ) आर्य अभि०. ५ ०दये । वयस्य आसनमासनम्; दीयतामासनमार्याय । विदू०—एदमास०. ६ अतिश्रेयांस्त्वं भूयाः. ७ राजा—वसुभूते उपविश. ८ कञ्चुकी. ९ राजा—बाभ्रव्य...। ( पृष्ठे हस्तं ददाति । सर्वे उपविशन्ति । ). १० अस्मात्परं—कञ्चुकी—बाभ्रव्यः—देवि बाभ्रव्यः प्रणमति. ११ अमात्य. १२ ( राजानमुद्दिश्य । ) भो. १३ ( आसनमादाय ।) भो एदं १४ एसा क्खु देवी पणामं करेदि.

वसुभू०—( ऊर्ध्वमवलोक्य निःश्वस्य च । ) देव न जाने किं विज्ञापयामि । ( अधोमुखस्तिष्ठति । )

वासव०—( सविषादमात्मगतम् । ) हा धिक् हा धिक् । किमिदानीं वसुभूतिः कथयिष्यति । ( क )

राजा—कथय किमेतत् । आर्य आकुल इव मेऽन्तरात्मा ।

बाभ्रव्यः—( अपवार्य । ) अमात्य चिरमपि स्थित्वा कथनीयम् । तत्कथ्यताम् ।

वसु०—( सास्रम् । ) देव न शक्यं निवेदयितुं तथाप्येष कथयामि मन्दभाग्यः । यासौ सिंहलेश्वरेण स्वदुहिता रत्नावली नाम आयुष्मतीं वासवदत्तां दग्धामुपश्रुत्य देवाय पूर्वं प्रार्थिता सती दत्ता—

राजा—( अपवार्य । ) देवि किमेतदलीकमेव त्वन्मातुलामात्यः कथयति ।

वासव०—( स्मित्वा । ) आर्यपुत्र न ज्ञायते कोऽलीकं मन्त्रयत इति । ( ख )

विदू०—ततस्तस्याः किं वृत्तम् । ( ग )

वसु०—सा च युष्मदन्तिकमानीयमाना यानभङ्गात्सागरे निमग्ना । ( इति रुदन्नधोमुखस्तिष्ठति । )

---

( क ) हद्धी हद्धी । किं दाणिं वसुभूदी कधइस्सदि । ( ख ) अज्जउत्त ण जाणीअदि को अलिअं मन्तोदित्ति । ( ग ) तदो ताए किं वुत्तम् ।

---

त्यत्र अतिश्रेयानिति पाठे अतिशयितं श्रेयः कल्याणं यस्य सः । आकुलः पर्याकुलः । अलीकमसत्यम् । त्वन्मातुल०-तव मातुलो विक्रमबाहुः तस्य । यानभङ्गान्नौकाया भग्नत्वात् ।

---

१ जानामि । किमपि वि०. २ रुदन्नधो०. ३ पर्याकुल एवास्मि, वसुभूते कथय किमेवं पर्याकुलयसि, ०भूते कथं पर्याकुल इवासि. ४ यत्कथ० तदिदानीमेव कथ्यताम्. ५ एष मन्दो दुर्भाग्यो विज्ञापयामि । यासौ तत्रभवता सिंह० ली नाम वासवदत्तामायुष्मतीमुपस्त्य देवाय प्रार्थिता सती न दत्ता; तत्रभवतः ०रस्य...नामायुष्मती सिद्धादेशेनादिष्टा योऽस्याः पाणिग्रहणं करिष्यति स सार्वभौमो राजा भविष्यतीति । राजा—ततस्ततः । वसु०—तत्प्रत्ययाद्दार्यर्थि यौगन्धरायणेन बहुशः प्रार्थ्यमानापि सा सिंहलेश्वरेण वासदत्तायाश्चित्तखेदं परिहरता न दत्ता. ६ किमिदमलीकं त्वं०,—मिदमिदानीमलीकं त्वदीयमा० प्रलपति. ७ ततो युष्म० माना सती वाहनभ०; ततो लावाणकेन वह्निना देवी दग्धेति वार्तामुत्पाद्य देवेन तदन्तिकं बाभ्रव्यः प्रहितः । पुनरपि प्रार्थिता च । ततस्तत्रभवता सिंहलेश्वरेण चिन्तितम् । देवेन सहास्माकं संबन्धलोपो मा भूदिति । दत्ता च सा रत्नावली देवाय प्रतिपादयितुमस्माभिरानीयमाना समुद्रे यानभङ्गान्निमग्ना; सा च युष्मदन्तिकं प्रहिता ततश्चास्माभिरानीयमाना वाहनभ०.

वासव०—( सास्रम् । ) हा हतास्मि मन्दभागिनी । हा भगिनि रत्नावलि कुत्रेदानीमसि । देहि मे प्रतिवचनम् । ( क )

राजा---देवि समाश्वसिहि समाश्वसिहि । दुरवगाहा गतिर्दैवस्य । यानभङ्गपतितोत्थितौ नन्वेतावेव ते निदर्शनम् । ( इति वसुभूतिबाभ्रव्यौ दर्शयति । )

वासव०--आर्यपुत्र युज्यत एतत् । परं कुतो ममैतावद्भागधेयम् । (ख)

( नेपथ्ये महान्कलकलः । )

हर्म्याणां हेमशृङ्गश्रियमिव निचयैरर्चिषामादधानः
सान्द्रोद्यानद्रुमाग्रग्लपनपिशुनितात्यन्ततीव्राभितापः ।
कुर्वन्क्रीडामहीध्रं सजलजलधरश्यामलं धूमपातै--
रेष प्लोषार्तयोषिज्जन इह सहसैवोत्थितोऽन्तःपुरेऽग्निः ॥ १४ ॥

अपि च ।

देवीदाहप्रवादोऽसौ योऽभूल्लावाणके पुरा ।
करिष्यन्निव तं सत्यमयमग्निः समुत्थितः ॥ १५ ॥

( सर्वे संभ्रान्ताः पश्यन्ति । )

---

( क ) हा हदम्हि मन्दभाइणी । हा बहिणि रअणावलि कहिं दाणिं सि । देहि मे पडिवअणम् । ( ख ) अज्जउत्त जुज्जदि एदं । परं कुतो मम एत्तिअं भाअहेअम् ।

---

दुरवगाहा दुर्ज्ञेया । दैवं किं घटयेदिति न ज्ञायते । इमाविव सापि कदाचिज्जीवन्ती तीरं प्राप्ता भवेदिति भावः । हर्म्याणामिति । अर्चिषां ज्वालानां निचयैः निवहैः हर्म्याणां हेमशृङ्गाणां सुवर्णशिखराणामिव श्रियं आदधानः कुर्वाणः । सान्द्राणां निविडानामुद्यानद्रुमाणां यानि अग्राणि तेषां ग्लपनेन म्लानतापादनेन पिशुनितः सूचितः अत्यन्ततीव्रः अभितापः यस्य तादृशः । पुनश्च धूमपातैः धूमावतरणैः क्रीडामहीध्रं क्रीडापर्वतं जलेन सहितः सजलः यः जलधरस्तद्वच्छ्यामलं कुर्वन् । प्लोषेण दाहेन आर्तः योषिज्जनः स्त्रीसमूहो यस्मात्तादृशः इह अन्तःपुरे शुद्धान्ते एषः अग्निः सहसा अतर्कितमेवोत्थितः । उत्प्रेक्षालंकारः । भयानकरसः । स्रग्धरा वृत्तम् ॥ १४ ॥ देवीति । पुरा लावाणके ग्रामे देव्याः दाहप्रवादः अभूत् तं सत्यं करिष्यन्निवाधुना । तत्त्वतो देवीं दग्ध्वेति भावः । अयमग्निः समुत्थितः ॥१५॥

---

१ नास्त्येतत्क्वचित्. २ अस्मादनन्तरं--इति मूर्च्छिता पतति । इत्य०. ३ वाहनभङ्गाभिपतितौ...वेव निद०. ४ अस्मात्परं--राजा ( अपवार्य । ) कथय किमेतदिति नावगच्छामि. वा०--देव श्रूयताम् । इत्य० क्वचित्. ५ निवहैः. ६ श्यामलैः. ७ देव्या...दोयं. ८ नन्सत्यं मन्ये वह्निः--त्यमत्राग्निरयमु०. ९ हा देव्व । बहिणिए कहिं तुमं पेक्खिदव्वा । ता देहि. १० इत्तिआ भागधेआः एत्तिआणि भाअधेआणि.

राजा—( ससंभ्रममुत्थाय । ) कथमन्तःपुरेऽग्निः । कष्टं देवी वासवदत्ता दग्धा । हा प्रिये वासवदत्ते ।

वासव०—आर्यपुत्र परित्रायस्व परित्रायस्व । ( क )

राजा—अये कथमतिसंभ्रमादिहस्थापि देवी नोपलक्षिता । देवि समाश्वसिहि समाश्वसिहि ।

वासव०—आर्यपुत्र मयात्मनः कृते न भणितम् । एषा खलु मया निर्घृणयेह निगडेन संयमिता सागरिका विपद्यते । तत्तां परित्रायतामार्यपुत्रः । ( ख )

राजा—कथं देवि सागरिका विपद्यते । एष गच्छामि ।

वसु०—देव किमकारणमेवं पतंगवृत्तिः क्रियते ।

बाभ्रव्यः—देव युक्तमाह वसुभूतिः ।

विदू०—(राजानमुत्तरीये गृहीत्वा । ) वयस्य मा खल्वेवं साहसं कुरु ।(ग)

राजा—( उत्तरीयमुत्सृज्य । ) धिङ् मूर्ख सागरिका विपद्यते । किमद्यापि प्राणा धार्यन्ते । ( इति ज्वलनप्रवेशं नाटयित्वा धूमाभिभवं नाटयन् । )

विरम विरम वह्ने मुञ्च धूमानुबन्धं
प्रकटयसि किमुच्चैरर्चिषां चक्रवालम् ।
विरहहुतभुजाऽहं यो न दग्धः प्रियायाः
प्रलयदहनभासा तस्य किं त्वं करोषि ॥ १६ ॥

---

( क ) अज्जउत्त परित्ताहि परित्ताहि । ( ख ) अज्जउत्त मए अत्तणो किदे ण भणिदम् । एसा क्खु मए णिग्घिणाए इध निअडेण संजमिदा साअरिआ विवज्जदि । ता तं परित्ताअदु अज्जउत्तो । ( ग ) वअस्स मा क्खु एवं साहसं करेहि ।

---

निगडेन शृङ्खलया संयमिता बद्धा । पतंगवृत्तिः पतंगवदग्नौ पातात्स्वशरीरनाशः । धूमाभिभवं धूमेनाभिभवः आवरणं तम् । विरमेति । हे वह्ने विरम विरम । झटिति शान्ता भव । धूमानुबन्धं धूमसांतत्यं मुञ्च । उच्चैः उच्चगामि अर्चिषां चक्रवालं मण्डलं किं प्रकटयसि । व्यर्थं तदित्याह—योऽहं प्रलये यः दहनोऽग्निस्तस्य इव भाः दाहकं तेजो यस्य तेन प्रियाया विरहहुतभुजा विरहाग्निना न दग्धस्तस्य त्वं किं करोषि तं कथं

---

१ ज्वलनं दृष्ट्वा ससंभ्रममुत्तिष्ठन्. २ कथमिहस्थापि देवी विस्मृता । अलमतिसंभ्रमेण; देवी न लक्षिता । ( कण्ठे गृहीत्वा । ) देवि अलं भयेन; ०लक्षिता । ( देव्याः पाणिं गृहीत्वालिङ्ग्य । ) देवि समा०. ३ ०रण इदं क्रि०—रण एव. ४ ०मुक्तं ०निना. ५ ०माक्षिप्यमाकर्षन्-मुत्सृजन्. ६ दह्यते. ७ किमर्थम्, किमस्माभिः...ध्रियन्ते-परिरक्ष्यन्ते. ८ नाटयति. ९ ०अदु ०अदु ०उत्तो. १० ण हि अत्तणो कारणे एवं भणामि । ...०णाए इध संयदा चिट्ठदि सा०. ११ भो मा क्खु सा०.

**वासव०**—कथं मम दुःखभागिन्या वचनादेवमध्यवसितमार्यपुत्रेण । तदहमप्यार्यपुत्रमेवानुगमिष्यामि । (क)

**विदू०**—( परिक्रामन्नग्रतो भूत्वा । ) भवति अहमपि ते पथ्युपदेशको भवामि । (ख)

**वसु०**—कथं प्रविष्ट एव ज्वलनं वत्सराजः । तन्ममापि दृष्टराजपुत्रीविपत्तेरिहैव युक्तमात्मानमाहुतीकर्तुम्[1] ।

**बाभ्रव्यः**—हा दैव किमिदमकारणमेव भरतकुलं संशयतुलामारोपितम् । अथ वा किं प्रलापेन[2] । अहमपि भक्तिसदृशमाचरामि ।

( सर्वेऽग्निप्रवेशं नाटयन्ति[3] । )

( ततः प्रविशति निगडसंयता सागरिका । )

**साग०**—( दिशोऽवलोक्य । ) हा धिक् समन्ततः प्रज्वलितो हुतवहः । ( विचिन्त्य सपरितोषम् । ) अद्य हुतवहो दिष्ट्या करिष्यति मम दुःखावसानम् । (ग)

**राजा**—अये[4] इयमासन्नहुतवहा वर्तते सागरिका । तत्त्वरितमेनां संभावयामि । ( त्वरितमुपसृत्य[5] । ) अयि प्रिये किमद्यापि संभ्रमे स्वस्थया[6] स्थीयते ।

(क) कधं मम[7] दुक्खभाइणीए वअणादो एव्वं अज्झवसिदं अज्जउत्तेण । ता अहंपि अज्जउत्तं एव्व अणुगमिस्सम् । (ख) भोदि अहं वि दे पंथोवदेसओ[8] होमि । (ग) हद्धी[9] समन्तदो पज्जलिदो हुतवहो । अज्ज हुतवहो दिट्ठिआ करिस्सदि मे दुःखावसाणम् ।

दहेः । रूपकालंकारः । मालिनी वृत्तम् ॥ १८ । अध्यवसितं प्रतिपन्नम् । दृष्टा राजपुत्र्याः रत्नावल्या विपत्तिर्नाशो येन तस्य । आहुतीकर्तुमेकदैव प्रक्षेप्तुम् । संशयतुलामारोपितं संशये निक्षिप्तम् । भक्तिसदृशं स्वामिभक्त्युचितम् । अग्निप्रवेशं करोमीत्यर्थः । दिष्ट्या सुदैवात् । दुःखावसानं देहदाहाद् दुःखसमाप्तिम् । आसन्नः हुतवहोऽग्निर्यस्याः सा आसन्नहुतवहा । संभावयामि अग्नेर्मध्यादुद्धरिष्यामीत्यर्थः । संभ्रमे त्वराकारणे ।

1 युक्तमिहैव राजा सहात्मा०; ०मिन्धनीकर्तुं. 2 स्वामन्, महाराज;...प्रलपितेन. 3 अस्मात्परं—राजा ( दक्षिणबाहुस्पन्दं निरूप्य । ) एतदवस्थस्य मम कुत एतत्फलम् । ( अग्रतोऽवलोक्य सहर्षोद्वेगम् । ) कथमासन्नहुतवहा वर्तते सागरिका । तत्त्वरितमेनां संभावयामि । इति पठ्यते कैश्चित्. 4 राजा—( त्वरितमुपसृत्य । ) अयि इय०. 5 त्वरितमिति नास्ति क्वचित्. 6 मध्यस्थतया वर्तसे. 7 कधं दुक्खकारिणीए वअणेण...। ता किं मए ठिआए । अहं वि. 8 अग्गदो-मग्गोवदेसओ. 9 दिट्ठिआ समं० ०लिदो अज्ज करि० दुःखावसारणं भअवं हुदासणो.

सागरिका—( राजानं दृष्ट्वा । स्वगतम् । ) कथमार्यपुत्रः । तदेतं प्रेक्ष्य पुनरपि मे जीविताभिलाषः संवृत्तः । ( प्रकाशम् । ) परित्रायतां परित्रायतां भर्ता । ( क )

राजा—भीरु अलं भयेन ।

मुहूर्तमपि सह्यतां बहल एष धूमोद्गमो ( अग्रतोऽवलोक्य । )
हहा धिगिदमंशुकं ज्वलति ते स्तनात्प्रच्युतम् ।
(विलोक्य ।) मुहुः स्खलसि किं कथं निगडसंयतासि (परिकरं बद्ध्वा ।) द्रुतं
नयामि भवतीमितः प्रियतमेऽवलम्बस्व माम् ॥ १७ ॥

( कण्ठे गृहीत्वा निमीलिताक्षः स्पर्शसुखं नाटयन् । ) अहो क्षणान्मेऽपगतोऽयं संतापः । प्रिये समाश्वसिहि समाश्वसिहि ।

व्यक्तं लग्नोऽपि भवतीं न दहत्येव पावकः ।
यतः संतापमेवायं स्पर्शस्ते हरति प्रिये ॥ १८ ॥

( उन्मील्याक्षिणी दिशोऽवलोक्य सागरिकां च मुक्त्वा । ) अहो महदाश्चर्यम् ।

क्वासौ गतो हुतवहस्तदवस्थमेत-
दन्तःपुरं ( वासवदत्तां दृष्ट्वा । ) कथमवन्तिनृपात्मजेयम् ।

वासव०—( राज्ञः शरीरं परामृश्य सहर्षम् । ) दिष्ट्याऽक्षतशरीर आर्यपुत्रः । ( ख )

---

( क ) कधं अज्जउत्तो । ता एदं पेक्खिअ पुणोवि मे जीविदाहिलासो संवुत्तो । परित्ताअदु परित्ताअदु भट्टा । ( ख ) दिट्ठिआ अक्खतसरीरो अज्जउत्तो ।

---

मुहूर्तमिति । एष बहलः घनः धूमोद्गमः मुहूर्तं क्षणमपि सह्यताम् । हहा इति खेदे । धिक् । इदं ते स्तनात्प्रच्युतमंशुकं वस्त्रं ज्वलति । किं कस्मात्कारणान्मुहुः स्खलसि । कथं निगडेन शृङ्खलया संयतासि । इतः अस्मादग्नेः भवतीं द्रुतं शीघ्रं नयामि । अतः हे प्रियतमे मामवलम्बस्व ॥ १७ ॥ निमीलिते अक्षिणी येन यस्य वा । अहो इत्याश्चर्ये । व्यक्तमिति । हे प्रिये लग्नोऽपि पावकः भवतीं न दहत्येवेति व्यक्तं स्फुटमेव । तत्र हेतुमाह—यतः अयं ते स्पर्शः संतापमेव हरति ॥ १८ ॥ क्वासाविति । गद्यांशैर्भिन्नमेतत्पद्यं तान्विहाय पठनीयम् । असौ संप्रत्येवोत्थितः हुतवहः क्व गतः । एतदन्तःपुरं सा अग्निकालपूर्वा अवस्था यस्य तत् तदवस्थम् । अस्पृष्टाग्नि

---

१ आत्मग०. २ अयि प्रियतमे भीरु । मुहूर्तमपि इ०; अलं संभ्रमेण—आवेगेन. ३ ०तमिव–मिह. ४ वहुल. ५ अहो. ६ त्वत्स्त०, ०नप्रच्यु०. ७ ता ते गतिर्न यामि भवतीं विना. ८ तीमहं. ९ ०यति. १० मे शोकाग्निसं०. ११ ०लिताक्षः. १२ क्वासौ प्रज्वलनहुताशनः तद० पुरम् । कथमचिन्त्यरूपमेवम्. १३ अज्जउत्त ०त्ताहि ०त्ताहि.

राजा—बाभ्रव्य एष—

बाभ्रव्यः—देवं इदानीं प्रत्युज्जीविताः स्मः ।

राजा— वसुभूतिरयं—

वसु०—विजयतां महाराजः ।

राजा— —वयस्यः—

विदू०—जयतु जयतु भवान् । ( क )

राजा—स्वप्ने मतिर्भ्रमति किं न्विदमिन्द्रजालम् ॥ १९ ॥

विदू०—भोः मा संदेहं कुरु । इन्द्रजालमेवेदम् । भणितं तेन दास्याःपुत्रेणैन्द्रजालिकेन यथैको मम पुनः खेलोऽवश्यं देवेन प्रेक्षितव्य इति । तत्तदेवैतत् । ( ख )

राजा—देवि इयं त्वद्वचनादस्माभिरिहानीता सागरिका ।

वासव०—( सस्मितम् । ) आर्यपुत्र ज्ञातं मया । ( ग )

वसु०—( सागरिकां दृष्ट्वा । अपवार्य । ) बाभ्रव्य सदृशीयं राजपुत्र्या ।

बाभ्रव्यः—अमात्य ममाप्येतदेव मनसि वर्तते ।

वसु०—( राजानमुद्दिश्य । ) देव कुत इयं कन्यका ।

राजा—देवी जानाति ।

वसु०—देवि कुतः पुनरियं कन्यका ।

---

( क ) जअदु जअदु भवं । ( ख ) भो मा संदेहं करेहि । इन्दजालं एव्वं एदम् । भणिदं तेण दासीएपुत्तेण इन्दजालिएण जहा एको उण मह खेलओ अवस्सं देवेण पेक्खिदव्वोत्ति । ता तं जेव्व एदम् । ( ग ) अज्जउत्त जाणिदं मए ।

---

इत्यर्थः । कथमियमवन्तिनृपात्मजा वासवदत्ता । एष बाभ्रव्यः । एष वसुभूतिः । अयं वयस्यः वसन्तकः । सर्वे यथापूर्वमविकृता एव दृश्यन्ते । अतो मे मतिः स्वप्ने भ्रमति किम् । किं नु स्वप्ने इदमभिदर्शनम् । अथ वा इन्द्रजालमिदं मायेयम् । वसन्ततिलकं वृत्तम् ॥ १९ ॥ अक्षतमग्निनाऽकृतापकारं शरीरं यस्य । वसु०-सागरिकां दृष्ट्वा इत्यादि । इत आरभ्य निर्वहणसंधिः । अत्र वसुभूतिबाभ्रव्याभ्यां नायिका-

---

१ विजयतां महाराजः । देव दिष्ट्या वर्धसे । पुनरुच्छ्वसिताः स्मः. २ देव दिष्ट्या वर्धसे. ३ विदूषकोऽयम्, वसन्तक एषः. ४ स्वप्नोऽयमिति भाति; किमिदमिन्द्र०. ५ कन्यका. ६ निर्वर्ण्य. ७ प्रकाशं राजा०, निर्वर्ण्य. ८ वसु. ९ एदं अ तेण दासीपुत्तेण इन्दजालिएण कधिदं जधा एक्को अवस्सं खिड्डुको तुम्हेहिं पेक्खिदव्वोत्ति । ता एदं तम् ।

